श्रीः ।

# जैमिनिपद्यामृतं ।

नाम

## जैमिनिसूत्राणां व्याख्यानम् ।

मूलकन्दल्या, उदाहरणेन, वृद्धकारिकासंग्रहेण च सहितम् ।

जयपुरमहाराजाश्रितेन सत्संप्रदायाचार्येण महामहोपाध्यायेन

श्रीदुर्गाप्रसादद्विवेदेन

निरूपितम् ।



तच्च

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्यनेन

स्वीये निर्णयसागराख्ययन्त्रालये मुद्राक्षरैरङ्कयित्वा

प्राकाश्यं नीतम् ।

(प्रथमावृत्तिः)

शाकः १८४६, खिस्ताब्दः १९२५.

मूल्यं १ रूप्यकः ।

॥ श्रीः ॥

# जैमिनिसूत्रस्य सहपद्यामृतस्य भूमिकादिक्—

भगवतो जैमिनिमुनेः पूर्वमीमांसासूत्राणीवामूनि जातकोपदेशसूत्राणि सुप्रसिद्धानि तावत् । यानि प्रायेण वृद्धकारिकाश्रयेणैव प्रौढश्रीबालकृष्णानन्दसरस्वतीस्वाम्यादयो व्याकुर्वते स्म । स्वाम्यादिग्रन्थतो या या वृद्धकारिका उपलभ्यन्ते तासु भूयसो भिन्नकर्तृका उत्सूत्रा अप्यासते । ता एताः कारिकाः स्वामिनां नीलकण्ठज्योतिर्विदां च द्वित्रटीकापुस्तकेभ्य उद्धृत्य यथास्थानं व्याख्यांशेन संगमय्य च परीक्षकाणां विनोदायान्ते योजिताः । अद्यावधि वृद्धकारिकाणामाकरग्रन्थोऽस्माकं दृष्टिपथं नावातीतरत्; अवतीर्णोऽपि मन्यामहे सूत्राणि नोपकुर्यादिति । यथा खलु जातकालंकारे 'यत्पूर्वं परमं शुकास्यगलितं सज्जातकं फक्किकारूपं गूढतमं तदेव विशदं कुर्वे गणेशोऽस्म्यहम्', इति प्रतिज्ञायापि बहुत्र शुकसूत्राणि मतान्तरेण संकीर्णतामानीतानि; तथैव जैमिनिसूत्राणि व्याख्याबलेनेति । अथवा यावत् कस्यचित् वृद्धस्य ग्रन्थप्रणयनप्रतिज्ञावाक्यं नासाद्यते; तावदेवमपि वक्तुं न युक्तम् ।

भवतु; संप्रति संप्रदायविच्छेदेन द्वित्राणां वृद्धानां वाक्यमिश्रणेन व्याख्यातॄणां मतिकर्दमेन च बहुत्र सूत्राणां तात्पर्यमन्यथाऽञ्जनिष्टेति नातितिरोहितम् । किंबहुना; क्वचित्सूत्राण्यपि प्रक्षिप्तानि । यथा प्रेमनिधिटीकायां प्रथमाध्यायस्य द्वितीयपादे—'तत्र मन्दसपर्योस्ताम्बूलदायी । चापे चन्द्रे नाविकः । शुक्रदृष्टौ विशेषेण', इति त्रिसूत्री ।

एवं सत्यपि कष्टे गतानुगतिकन्यायेन मयाप्यात्मवचसां शुद्ध्यै भगवज्जैमिनिसूत्राशयो यथाप्रज्ञं व्यलेखि। तत्रैवं प्रबन्धनिर्माणशैली—पूर्वं प्रायो यथापेक्षं सूत्राणां तात्पर्यं श्लोकतो निबद्धम्, तदधस्तात् सूत्राणामर्थः, तत उदाहरणम्; इत्थं दैवज्ञकीर्तिदुराशया त्रिधा यतितम् । मन्ये बालानामुपकारः स्यात् ।

भवन्ति चात्र हृदयोद्गारवाहीनि पद्यानि—

गङ्गोलीकुलदीपके जयपुरी-शिक्षाविभागाधिपे
सद्विद्याविनयावदातचरिते संजीवने जाग्रति ।
श्रीमन्माधवसिंह-सत्कृत-महागीर्वाणविद्यालया-
ध्यक्षो जैमिनिसूत्रवृत्तिघटनं दुर्गाप्रसादो व्यधात् ॥

अथ समाम्नायायां जैमिनिपद्यामृतस्य टीकायां मूलकन्दल्यां स्वधर्मधुरंधराणां दैवज्ञवाचस्पतीनां ज्योतिःपारदृश्वनां चातुर्मास्ययाजिनां वेतालोपाभिधानां विनाय-

कशास्त्रिणामात्मनः सतीर्थ्यानां कृतिरुपदेशार्थोद्योतो दृष्टः । यदन्ते खल्वेवमुपश्लोकितम्—

न सन्ति गुरवोऽधुना स दिवि चन्द्रदेवोऽप्यगा-
त्परे न खलु तादृशः सखिसुधाकरोऽप्यस्तमैत् ।
विलोकयतु कः पुनर्हृदयमेतदुद्घाटितं
विवेचनविधौ भवेज्जगति कोऽपि वोत्पत्स्यते ॥

हन्त कालमहिम्ना द्वितीयं चरणमेवं पठनीयम्—

'न कोविदसुधाकरोऽप्यस्तमैत् विनायकोऽप्यस्तमैत् ।'

अत्रेदमपि वक्तव्यम्—

अरे दुष्टव्याख्याविषमविषसंक्रान्तवपुषां
रहस्यं सूत्राणां प्रलयमगमज्जैमिनिमुनेः ।
अथैतच्चोद्धर्तुं कथमपि मया भूरि यतितं
प्रमाणं तत्रार्याः क इह निजकृत्यं न गणयेत् ॥

अथवोत्तरार्धमेवं पठनीयम्—

वयं वा वृद्धा वा मुनिवचनतत्त्वार्थकलने
विदग्धाः संदिग्धाः क इह कृतकृत्यः खलु भवेत् ॥

इति शिवम् ।

---

श्री ६ बापूदेवशास्त्रिचरणाः । २ ज्यौतिषमार्तण्डचन्द्रदेव-ज्योतिषशास्त्रोद्धारका महामहोपाध्यायधुरंधराः सुधाकरद्विवेदिनः ।

अथ द्वितीयप्रवाहः



---

१ अत्रैतदुक्तं भवति—संप्रति कतिपये ज्यौतिषपुराणादौ पुरुषायुषस्य शतसहस्रवर्षावधिकसंख्यादर्शनात्तत्र संदिहाना मीमांसादर्शनीयेन सहस्रसंवत्सरशब्दस्य सहस्रदिनपरताधिकरणन्यायेन व्यवस्थामुत्पादयन्तो धर्मग्रन्थानाकुलयन्ति । तैरेवमाकलनीयम्—'आदित्यो वा सर्वऋतवः स यदोदेत्यथ वसन्तः, यदा संगवोऽथ ग्रीष्मः, यदा मध्यंदिनोऽथ वर्षाः, यदापराह्णोऽथ शरद्, यदास्तमेत्यथ हेमन्तशिशिरौ ।' इति ब्राह्मणवाक्यादिना भवतु सत्रे तथाभिधेयः संवत्सरशब्दः; परं तावता प्राचामाशया न कोपनीयाः । मूलरामायणादौ हि—

'दशवर्षसहस्राणि दशवर्षशतानि च ।
रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥', इति ।
'षष्टिवर्षसहस्राणि जातस्य मम कौशिक ।
दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि ॥', इति ।

---

'अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ।

कृतत्रेतादिषु ह्येषामायुर्ह्रसति पादशः ॥', इति च ।

स्मर्यते । तत्र निरूपितदिशा श्रीमद्दशरथस्य १६६ वर्षाणि ८ मासा आयुः । भगवतस्तु ३० वर्षाणि ६ मासाः २० दिनानि । कृतयुगीयमायुस्तु वर्षादि १।१।१० पलात्मकादिनेन ।

यदेतदायुषो दीर्घत्वं सांप्रतिकैरसंभाव्यमानं धर्ममन्येषु परीक्ष्यते तदचीतिरेकैः—

'एकांशकस्था बुधशुक्रमन्दा धर्मे स्थिता लग्नमुपागता वा ।

षष्ठाष्टमे वा हिमगुश्च यस्य सहस्रवर्षद्वयमस्य जन्तोः ॥

जीवांशकस्थाः सकला महेन्द्राः केन्द्राश्रिता धर्मधनाश्रिता वा ।

जातो नरः प्रव्रजितः स बालो युगान्तमायुर्बहुशास्त्रकर्ता ॥

मन्दांशकस्था रविभौमजीवाः कर्माश्रिता धर्मयुता बलाढ्याः ।

राशेः समाप्तौ हिमगो विलग्ने युगान्तमायुः श्रियमाप्नुयाद्वाति ॥

धर्मेश्वरे धर्मगते च यस्य भौमांशकस्थे हिमगौ च दृष्टे ।

मुनीश्वरोऽयं मुनियोगजातः शास्त्रार्थकर्ता युगमायुरवाप्नोति ॥'

'गुरुशशियुते कुलीरलग्ने शशितनये भृगुजे च केन्द्रयाते' इति ।

भवरिपुसहजोपगैश्च शेषैरमितमिहायुरनुक्रमाद्विना स्याद् ॥ इति॰'

अत एवासमञ्जसनिरासाय शतशब्दस्य यथाश्रुतार्थपरिष्कारेऽनेकत्र दृष्टः—

'शुद्धौ शतायुः पुरुषः प्रदिष्टो

बहुत्वयोगी शतशब्दवाच्यः ।

रामादिकानामधिकायुराप्तौ

युक्तं प्रतीमः फलितेऽमितायुः ॥

स वार्षिको वासरिको भवत्र-

भोगो भवेद् भास्करसंश्रयेण ।

तत्रापरं मासनगौरवेण

स स्वीचकारेति विरोधभङ्गः ॥' इति ।

१ वस्तुतस्त्विदमायुर्दायगणित वृद्धस्वामिव्याख्यामूलकम् । अत्र 'पूर्णमादौ'—, इत्यनेन 'होराल्पशादिभांशे तु'—, इत्यनेन 'एकोऽष्टमेशः स्वोच्चस्थः पर्यायार्धं'—, इत्यनेन च प्रकारेण वृद्धोक्तेन पृथक् पृथक् आयुरानेतुं शक्यम् । खण्डग्रहणे स्वाम्यादिव्याख्यापि निद्यते । कल्यापदेन गृह्यमाणमायुःखण्डमपि संप्रति सत्रेषु न प्राप्यते । यत्तु तत्रोचारिते प्रथमसूत्रे आयुः १ पितृदिनेशा २ म्याम् ३ इति पठनपत् । मध्यमपरलोपिसमासेन पितृदिनेन ३ युक्त १८ २ तथा दार्गेशास्तरयया । एकमायुर्भवतीत्यर्थः । दीर्घं मध्य हीनमिति तत्तत्स्पष्टतया षण्णवतिश्चतुःषष्टिर्द्वात्रिंशदिति सिध्यतीति विनायकशास्त्रिभिर्व्याख्यायं तत्र विचार-

सहमित्यपि मार्मिकाणां प्रत्यक्षम्। स्पष्टमायुर्दायगणितं तु सूत्रकारगुरुणा भगवता बादरायणेनोपदिष्टम्—

'राश्यंशकलागुणिता द्वादशनवभिर्ग्रहस्य भगणेभ्यः।
द्वादशहृतावशेषेऽब्दमासदिननाडिकाः क्रमशः॥
होरादयोऽप्येवं बलयुक्तान्यानि राशितुल्यानि।
वर्षाणि संप्रयच्छत्यनुपातात्वाश्रकादि फलम्॥', इति।

इदमेवानयनं वराहमिहिराचार्येण—

'वर्गोत्तमस्वराशिद्रेष्काणनवांशके सकृद् द्विगुणम्।
वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणत्वे सकृत्त्रिगुणम्।
शत्रुक्षेत्रे त्र्यंशं नीचेऽर्धं सूर्यलुप्तकिरणाश्च।
क्षपयन्ति स्वादायान्नास्तं यातौ रविजशुक्रौ॥
सर्वार्धत्रिचतुर्थेन्द्रियषष्ठभागान्व्ययादशुभाः।
सन्तोऽर्धमतो वाम बलवानेकर्क्षगेष्वेकः॥'

इति बादरायणाभिमतार्थसंग्राहकार्याभिः परिष्कृत्य लघुजातके लिखितमिति सर्वं भट्टोत्पललेखतो व्यक्तम्।

प्रकृते सूत्रग्रन्थस्तु योगायुर्दायवर्णनाभिप्रायेणायोजयितुं सुशकः। तथाहि—'शशिनन्दपावकाः—', इति स्थिरदशाब्दाः संकलिताः षण्णवतिर्भवन्ति (७।८।९)×४=९६ दीर्घं मध्यं हीनमिति सौत्रपदैरायुषस्त्रैविध्याचत्क्रमदर्शनाच्च द्वात्रिंशत्प्रमाणयस्त्रयो भागा अपि ९६÷३=३२। ३२×१=३२। ३२×२=६४। ३२×३=९६। वृध्यादिप्रसङ्गे कक्ष्यावृद्धिः, एकराशिवृद्धिः, नवांशवृद्धिरित्येवमादयः, सौत्राः प्रयोगाः। तत्र कक्ष्याशब्दाद् एकादश गृहीता एकदेशिमताभिप्रायेण स्वामिना। त एव मुख्यत्वेनाङ्गीकर्तव्याः। उत्तरत्र यथाश्रुतोऽर्थः। एवं 'पितृलाभरोगेशप्राणिनि'—, इत्यादावपि चिन्त्यमिति मदुक्तं कियद् इत्यत्र परीक्षकाः प्रमाणमिति विरम्यते।

॥ श्रीगणेशाय नमः ॥

# जैमिनिपद्यामृतं

## मूलकन्दलीवृत्तिसहितम् ।



परस्परप्रेमरसप्रसारा सा शारदा सा कमलालया च ।
युष्माकमुद्दिश्यसमृद्धिवृद्ध्यै प्रयत्नकार्यालयमादधातु ॥ १ ॥
याऽनेकधा द्वादशधापि भक्ता प्रज्ञानुमेया खलु कर्मपङ्क्तिः ।
सा चार्यचर्योपरिणामसिद्धिसिद्धान्तिताऽऽरोहतु शेमुषीं वः ॥ २ ॥
आसाद्य वैदुष्यमुदस्य कूटमाश्रित्य याथार्थ्यमुदीक्ष्य मेयान् ।
पूर्वापरालोकनसृष्टतत्त्वो वदेत्फलं तत्सफलत्वमृच्छेत् ॥ ३ ॥
आघ्राय गन्धान् परसूत्तजातान् संधाय लोकान् बहुधा प्रपञ्चैः ।
प्रवर्तते यः फलिताभिमानी स साधुवाचापि न पूजनीयः ॥ ४ ॥
विमृश्यते जैमिनिसूत्रसिद्धपद्यामृतं सम्प्रति मूलबद्धम् ।
उत्सार्य शैवालमिवात्र फल्गु वारीव सारं रसयन्तु सन्तः ॥ ५ ॥

अथ पूर्वं तावद् द्रुतविलम्बितत्रयेण प्रतिपाद्यं प्रतिजानीते—

**जयति लोकविलोकनदीपिका सवितृमण्डलदीप्तिवितानिका ।**
**तदनु जातकतत्त्वनिदर्शकं जयति जैमिनिसूत्रकदम्बकम् ॥ १ ॥**
**सकलसूत्रसुमानि यथायथं मतिगुणेषु निवेश्य विकास्यते ।**
**सुमनसां हृदयग्रहणक्षमा नवनवावनवास्तुरसौ कृतिः ॥ २ ॥**
**इह चिरंतनसूक्तिषु यावती प्रकृतकृत्यकरी कृतिरीक्ष्यते ।**
**तदनुपक्रमदुष्कचमत्कृतौ सुलभतां लभतां फलितक्रमः ॥ ३ ॥**

जयतीति—लोकानां जनानां यद्विलोकनं निरीक्षणं तदर्थं दीपिका दीपज्योतिः; सवितृमण्डलस्य सूर्यबिम्बस्य या दीप्तयः प्रकाशास्तद्वितानिका पुष्टो जयति सर्वोत्कर्षेण वर्तते ॥

तदनु तज्जयवादानन्तरं; जातकं होराशास्त्रम्, तत्तत्त्वस्य रहस्यस्य निदर्शकं प्रकाशकं जैमिनिसूत्रकदम्बकं जैमिनिसूत्रजातं जयति ॥ १ ॥

सकलेति—सकलानि अविकलानि, सूत्राण्येव कुसुमानि सुमानि, यथायथं यथास्थानं, मतिर्बुद्धिरेव गुणास्तन्तवस्तेषु निवेश्य संयोज्य, सुमनसां विबुधानां हृदयग्रहणक्षमा मनोरञ्जनसमर्था; नवनवा नूतनप्रकारा; अवनस्य प्रीणनस्य, आनन्दस्येति यावद् वास्तुः स्थानविशेषः । 'वासुः' इति वा पाठः । असौ जैमिनिपद्यामृतरूपा कृती रचना विकास्यते प्रकाश्यते निष्पाद्यत इति यावत् ॥ २ ॥

इहेति—इह जैमिनिसूत्रटीकाटिप्पणीषु, प्रमाणत्वेनोद्धृता या चिरंतनानां सूक्तयो वाक्यानि, तत्र यावती यत्परिमाणा प्रकृतकृत्यकरी प्रस्तुतार्थसंपादिका कृतिरीक्ष्यते उपलभ्यते, तदनुपक्तं यन्मदुक्तं वाक्यजातं तस्य चमत्कृतौ चमत्कारे फलितक्रमः फलकथनपरिपाटी सुलभता सौलभ्यं लभतां प्राप्नोतु । यावतीति कथनाद् वृद्धादिनिरूपितविरुद्धसूत्रार्थपरित्यागः सूच्यते ॥ ३ ॥

अत्रेदं बोध्यम्—'उपदेशं व्याख्यास्यामः १।१।१' इत्यादि 'सिद्धमन्यत् २।४।३७' इत्यन्तं जैमिनीयं जातकशास्त्रम् । तत्र 'क ९ ट ९ प ५ य ■ वर्गभवैरिह पिण्डान्त्यैरक्षैरङ्काः । नि ञ्यचि शून्यं ज्ञेयं तथा स्वरे केवले कथितम् ॥ इति परिभाषया राशिभावप्रतिपादनम् । तत्रापि नरपतिजयचर्यादिप्रसिद्धरीत्या अङ्कानां बोधने वर्णानामनर्थकतया प्रायेणाशुद्धिप्रसङ्गः स्यादिति राशिभावबोधनार्थमुचिताः शब्दा एव सूत्रेषु निबद्धाः । औचित्यं च तत्तच्छब्दयोस्याङ्कानां द्वादशतक्षणत्वे सति शेषत्वम् । यथा 'दारभाग्य—१।१।५' इति सूत्रे दारशब्देनाष्टाविंशतिसंख्या बोध्यते, अस्या द्वादशभिस्तष्टिताया चत्वारः शेषः, तेन चतुर्थो भावो बुध्यते । एवं सर्वत्रोचितशब्दनिबन्धनात् संख्या बोध्या । यदि चात्र चतुःसंख्याबोधको बादिवर्णः प्रयुज्येत, तदा स कदाचन लेखकादिदोषेण पवर्गीयबादिवर्णेऽपि पठ्येत । तथा सति ञ्यादिसंख्यावबोधे विपरीतं प्रसज्येत । एतेनान्यापेक्षया मुनीन्द्रोद्भाविताङ्कबोधनशैली सुतरां स्पृहणीयेति दरमुकुलितनयनैर्विभाव्यम् ॥

अथ सूत्रार्थसंग्राहका श्लोका व्याख्येयाः, तत्र प्रतिश्लोकं यावतां सूत्राणां तात्पर्यमुपनिबद्ध्यते तावन्ति तच्छ्लोकविषमपदव्याख्यापुरस्सरं यथासंबन्धं सवृत्तिकानि करिष्यन्ते । तत्र तावच्छास्त्रारम्भसूत्रम्—

उपदेशं व्याख्यास्यामः ॥१।१।१॥

उपदिश्यन्ते प्रतिपाद्यन्ते शुभाशुभमिश्रकर्माण्यनेनेत्युपदेशो जातकशास्त्रविशेषः; तं व्याख्यास्यामो निरूपयिष्यामः ॥

अथान्यजातकविलक्षणां दृष्टिं भुजङ्गप्रयातेनाह—

चराः स्याद् भुजङ्गाशुगेशान (८।५।११) राशी-
न्स्थिरास्तर्कवैश्वानराङ्क (६।३।९) प्रमाणान् ।
द्विदेहा नगाम्भोधिदिग्( ७।४।१० ) मानि पूर्णं
प्रपश्यन्ति तन्निष्ठखेटाश्च तद्वत् ॥ ४ ॥

चरा इति—क्रान्तिवृत्तापरनामधेयस्य भचक्रस्य द्वादशो भागो राशिरिति प्राचीनामाम्नायः । स तावत्स्वसदृशं भागान्तरं पश्यतीदमेव वैलक्षण्यम् । यतः स भागोऽपरजातकादिषु भोग्यत्वेनैव निर्दिष्ट इति । शेषं स्पष्टम् ॥ ४ ॥

अभिपश्यन्त्यृक्षाणि ॥१।१।२॥ पार्श्वभे च ॥१।१।३॥
तन्निष्ठाश्च तद्वत् ॥१।१।४॥

ऋक्षाणि राशयोऽभिपश्यन्ति स्वसंमुखमवलोकयन्ति; स्वाभिमुखस्थितं राशिं पश्यन्तीत्यर्थः । तथा पार्श्वभे स्वदक्षिणवामपार्श्वयोः स्थिते भे राशी पश्यन्ति । तथा चैको राशी राशित्रितयं पश्यतीत्यर्थः संपन्नः ॥ अत्रैक्ययोगकरणेनापीष्टसिद्धौ योगविभागो वृद्धकारिकागतविनापदव्यवच्छेद्यप्राप्त्यर्थ इति ऋजवः । वस्तुतस्तु नात्र वैयाकरणनीतिनिर्वाहः। तथा च वृद्धकारिका—चरं घनं विना स्थाणु स्थिरमन्त्यं विना चरम्। युग्मं स्वेन विना युग्मं पश्यतीत्ययमागमः ॥ अत्रेदं माधवप्रसादस्तु लाघवेनाह—चरं पूर्णघनात्स्वाच्च स्थिरमन्त्याच्च पश्यति । युग्मं स्वाद् वेदशैलाशास्वद्गताः खेचरास्तथा ॥ तथैव तन्निष्ठा द्रष्टृभूतराशिगता ग्रहास्तद्राशिवरस्वसंमुखदक्षिणवामभागगतान् दृश्यभूतानाशीं स्वनिष्ठग्रहांश्च पश्यन्तीत्यतिदेशः । अत्रेदं रहस्यम्—क्षितिजानुकारं भवलयं विधेयम् । तत्पूर्वापरयाम्योत्तररेखाभ्यामङ्कितं कार्यम् । तत्र पूर्वादिदिगनुरुद्धं चतुर्भुजं विधेयम् । ततः पूर्वादिदिग्बिन्दुभ्य उभयतः षष्टिभागानां द्विगुणषष्टिभागानां च पूर्णज्या कार्या । एवं कृते राशिसंज्ञिता द्वादशभागा उत्पद्यन्ते । तत्र युक्त्या यद्यपि सव्यगणना न्याय्या तथापि व्यवहारेण मीनान्तमनुसृत्यापसव्यक्रमेण द्वादश राशयो विलेख्याः । अथ मीनान्तात्पञ्चचत्वारिंशद्भागान्तरे पूर्वपदादिकल्पनया या नवत्यंशपूर्णज्या कृता तस्मात्तदुत्तरं सार्धशतभागानां पूर्णज्या विधातव्या । एवमपसव्यक्रमेण सौम्यादिविदिक्षु कृतरेखाणामग्रेषु सार्धशतभागानां पूर्णज्याविधानेन कुण्डली संपद्यते । तत्र कोऽपि राशिः स्वसंमुख–दक्षिण वाम–भागगतरेखान्तर्वर्तिनं राशिमवलोकयेत् । एवमत्रावलोकनरेखा दृक्सूत्रत्वेन परिणमन्ति । ता द्विसमावघटितकोणाद् घर्गक्षेत्राक्षरस्थिरघटितकोणादायतद्वयाच्च नातिरिच्यन्ते ।

## अथोदाहरणप्रक्रिया—

स्वस्ति श्रीवैक्रमाब्दः १९२९ सातवाहनीयः शकः १७९४ मार्गशीर्षशुक्लचतुर्दशी भृगुघट्यादि ४५।३२ कृत्तिकानक्षत्रम् ७।४१ सिद्धियोगः १०।३५ गरकरणम् १५। २७ दिनमानम् २५।५१ श्रीमन्मार्तण्डमण्डलार्धोदयादिष्टम् २०।५९ एतत्समये पारीकपुरोहितोपाध्यस्य जनार्दनवंश्यस्य श्रीमच्चिरजीविनो माधवप्रसादशर्मणो जन्माभूत् । तत्र जयपुरराजधान्यां विषुवती ६।६ विषुवत्कर्णः १२।२७ मध्यरेखातो देशान्तरनाडिकादि प्रसक्त ०।२ मेषादीना व्यवह्रियमाणाः सायनोदयाः ।

| राशयः | मेषः | वृषः | मिथुनः | कर्कः | सिंहः | कन्या | तुला | वृश्चिकः | धनु. | मकरः | कुंभः | मीन |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| घट्यः | ३ | ४ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ४ | ३ |
| पलानि | ३७ | १० | ३ | ४२ | ४८ | ३९ | ३९ | ४८ | ४२ | ३ | १० | ३७ |

सौरसारणीतः स्पष्टा ग्रहाः सगतयः।

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | रा. | के. |
|---|---|---|---|---|---|---|---|---|
| ७ | १ | ५ | ७ | ४ | ९ | ८ | १ | ७ |
| २९ | १५ | १७ | २७ | १० | ८ | २६ | १० | १० |
| ५१ | ० | २५ | १४ | २४ | २ | २४ | १५ | १५ |
| २४ | १४ | ११ | ४८ | २१ | ४२ | १८ | ३२ | ३२ |
| ६१ | ७७३ | ३९ | ५५ | १ | ७२ | ६ | ३ | ३ |
| १९ | ९ | २ | ३० | १ | ४० | ५४ | ११ | ११ |

अथ जन्मकुण्डली।




अयात्र मीनराशिः स्वसंमुखस्थां कन्यां तद्गतं भौमं च पश्यति। एवं स एव मीनः स्वदक्षिणपार्श्वस्थं मिथुनं, तथा स्ववामपार्श्वस्थं धनूराशिं तद्गतं शनिं च पश्यति। एवमेव कन्याराशिस्तत्रिष्ठो भौमश्च स्वसंमुखस्थं मीनं पश्यति। तावेव पुनः स्वदक्षिणपार्श्वस्थं धनुर्स्थितं शनिं च पश्यतः। तथा स्ववामपार्श्वस्थं मिथुनराशिं पश्यतः। एवमेव

मेषादिष्वपि परस्परं दृष्टयो बोद्धव्याः । एवं भावकुण्डल्यामप्युभयथा दृष्टयः । वस्तुतस्तु भावकुण्डली मन्दप्रयोजना ॥

अथार्गलापदपरिभाषितार्थमुपजातित्रयेणाह—

राशेर्विचार्याद्थवा नभोगा-
च्चतुर्थधरा वारि (४) धना (२) य (११) संस्थाः ।
स्युरर्गला भस्य खगस्य तस्य;
न चेद्दश (१०) द्वादश (१२) विक्रम (३) स्थाः ॥ ५ ॥
इहार्गलासाधकखेचरेभ्य-
स्तद्बाधका न्यूनकृशा न चेष्टाः ।
तृतीयसंस्थैर्द्व्यधिकैर्युसद्भिः
पापैरपेतार्गलमर्गलं स्यात् ॥ ६ ॥
उत्पादयन्त्यर्गलमात्मजस्याः
धर्मे (८) स्थितास्तस्य विघट्टकाः स्युः ।
तमोनभोगस्य तु वैपरीत्या-
त्समामनन्त्यर्गलमेतमार्याः ॥ ७ ॥

राशेरित्यादि—विचार्याद् विचारविषयीभूताद् राशेरथवा ग्रहाद् चतुर्थद्वितीयैकादशस्थानस्थिता ग्रहाः, तस्यैव विचार्यस्य राशेरथवा ग्रहस्यार्गलाः स्युः । त्रिभिर्ग्रहैः पूर्णा, द्वाभ्यां मध्यमा, एकेन कनिष्ठेति केशवः । अत्र यथासंभवं वक्ष्यमाणबलचिन्ता कार्या । अस्या अर्गलाया यथाक्रमं दशद्वादशतृतीयस्थानस्था ग्रहाः बाधकाः स्युः । उक्तस्थानेषु ग्रहसत्वेऽर्गला न स्युरित्यर्थः । अथार्गलाकर्तारो यावन्तो ग्रहास्तेभ्योऽर्गलाप्रतिबन्धका ग्रहाः संख्यया न्यूना अल्पाः, बलेन कृशाः क्षीणा नाद्रियन्ते । द्वौ चेदर्गलाकर्तारौ, एकश्चेत्तत्प्रतिबन्धकः, प्रबलश्चेदर्गलाकर्ता दुर्बलश्चेत्तत्प्रतिबन्धकस्तदा प्रतिबध्यप्रतिबन्धकभावो न भवतीति तात्पर्यम् । एताः शुभाशुभग्रहकर्तृकाः सप्रतिबन्धा अर्गलाः । अर्गलाशब्दश्चिलिङ्गी ॥

तृतीयसंस्थैर्द्व्यधिकैस्त्र्यादिभिः पापैर्ग्रहैरर्गला स्यात् । एषा केवलपापकर्तृका अप्रतिबन्धा । न पूर्वार्गलेव स्थानविशेषस्थितैर्ग्रहैः प्रतिषिध्यत इत्यर्थः । 'अपेतार्गलम्' इत्यत्रार्गलशब्दस्य यथाश्रुतोऽवरोधार्थो गृह्यते; परत्र तु परिभाषितार्थ इति विशेषः । अयमर्गलाप्रतिबन्धो विपरीतार्गलशब्देनापि परिभाष्यते वृद्धैः ॥

उत्पादयन्त्यर्गलमात्मजस्था इत्यत्र बहुवचनमविवक्षितम् । तेन ग्रहेण ग्रहाभ्यामप्यर्गला बोध्या । बाधकविषये तु 'न न्यूना विबलाश्च' इति सूत्रमुपतिष्ठत एव । एषापि शुभाशुभग्रहकर्तृका सप्रतिबन्धा ॥

तम प्रधानो नभोगो ग्रह तमोनभोग । 'प्रदिशेता तमोग्रहौ' इत्यादौ तथा-प्रयोगात् । केतुरित्यर्थ । राहुरपीति केचित् । तस्य नवममर्गलास्थान पञ्चम तत्प्रति-बन्धकस्थानम् । तदेतद्वैपरीत्य पूर्वत्रापि योजनीयम् ॥ ५–७ ॥

**दारभाग्यशूलस्थार्गला निध्यातुः ॥१।१।५॥ रिष्फनीचकामस्था विरोधिन. ॥१।१।७॥ न न्यूना विबलाश्च ॥१।१।८॥**

निध्यातुरवलोकयितुर्द्रष्टुरिति यावत् । राशेर्ग्रहस्य वा 'आलोकन तु निध्यानम्' इत्यभिधानात् । दार (=२८–१२ शे=४) भाग्य (=१४–१२ शे=२) शूल (=३५–१२ शे=११) स्था दारादिशब्दसकेतितासु सख्यासु द्वादशतष्टासु यदवशिष्यते तद्बोध्यस्थानस्थिता अर्गला स्यात् । तन्निष्ठेषु ग्रहेषु वर्तमानेषु । अत्र 'अभिपश्यन्ति–' इत्यादिसूत्रजन्या निध्यातृपदेन राशेर्ग्रहस्य च बोधो निर्बाध । अत एव कृष्णानन्दसरस्वतीनीलकण्ठकेशवाचार्यादिभी राशेर्ग्रहस्य चाविशेषेणार्गला प्रतिपादिता । यद्यपि 'पत्नी (१) लाभ (७) योर्दिष्टया निराभासार्गलया ॥ १।३।१२॥' इति सूत्रेण भावार्गला लभ्यते, तथापि जातिस्विरूपेण ग्रहार्गलाप्रतिषेधाभावात् पर्यन्यवक्षणप्रवृत्तिरिति न्यायाच्चातिदेशमर्यादया यथासभव तत्फलानुसधाने च प्रत्यवाय इति विवेचनीयम् ॥

अथ दारादिशब्दबोध्यार्गलाकर्तॄणा क्रमेण रिष्फ (=२२=१०) नीच (=६०=१२) काम (=५१=३) स्था ग्रहा विरोधिनोऽर्गलानिवर्तका स्यु । अत्रेद रहस्यम्—सर्वा खल्वर्गला प्रतिबन्धकाभावे शुभा, प्रतिबन्धकसत्वे तु पापा स्यात् न तु शुभग्रहकृता शुभा पापग्रहकृता पापेति भ्रमितव्यमिति । सूत्रवृद्धकारिकयो प्रामाण्यबलाबलविवेके सूत्रस्योपजीव्यत्वाट्टीकादिसाधनेन नियन्त्रितत्वाद् वृद्धकारिकाणामुपजीवकत्वादानुपूर्व्या लाभाभावान्मतान्तरसङ्कीर्णत्वाच्च बहुत्र सूत्राणामाशयवर्णनावसरे न प्रमाणत्वेनोद्धरिष्यन्ते कारिका इति वेदितव्यम् ॥

दारादिबोध्यार्गलाकर्तृग्रहाणां विरोधित्वेन प्रतिपादिता रिष्फादिपदबोध्यस्थानस्था ग्रहा न्यूना बाध्यापेक्षया न्यूनसख्याका , विबला वक्ष्यमाणसौम्यबलहीनाश्च विरोधिनो न स्यु । नहि प्रबलो दुर्बलेन बाध्यत इति तात्पर्यम् ॥

**कामस्था तु भूयसा पापानाम् ॥१।१।८॥ प्राग्वत्त्रिकोणे ॥१।१।९॥ विपरीतं केतो. ॥१।१।१०॥**

कामस्था तृतीयस्थानस्था अर्गला तु पापाना पापग्रहाणां भूयसा बहुत्वेन स्यात् । क्षीणेन्दुर्कमहीसुतार्कतनयास्तद्युतो बुधो राहुकेतू चेति पापा । वक्ष्यमाण केतो शुभत्व प्रतिपादन ॥ चरदशाविषयकमेव । बहुत्व तु भ्यादिग्रहापेक्षि । 'भूयाद्यिषु बहुतरे पुनरर्थे' इति मेदिनीकार । त्रिकोणे पञ्चम–नवमस्थानयोरर्गला, तत्प्रतिबन्धकश्च प्राग्वत् पूर्वसूत्रोक्तवत् स्याताम् । पञ्चमस्थाने शुभाशुभमिश्राणामन्यतमाश्रयस्थानेऽर्गला स्याद्, यदि नवमे न्यूनसनिबरतदोषानाक्रान्तग्रहावस्थान न स्यादिति तात्पर्यम् । यतो केतुग्रहस्यैतदर्गल प्रतिबन्धकस्थान विपरीत विलोम स्यात् । नवममर्गलास्थान पञ्चम

तत्प्रतिबन्धकस्थानमित्यर्थः। एवं दारभाग्यसूत्रेऽपि । अत्र द्रष्टुरग्रतः पृष्ठतो वा यावतिथमर्गलास्थानं तद्वैपरीत्येन तावतिथमेव तदर्गलाप्रतिबन्धकस्थानं भवतीत्यादि निरीक्षणीयम् ॥

अत्रेदमपि पर्यालोचयितव्यम्—अर्गलेति सूत्रणात्कुत्रास्या उपयोग इति विचारे "पत्नी ( १ ) लाभ ( २ ) योर्दिष्ट्या निराभासार्गलया १।३।२२ ॥ शुभार्गले धनसमृद्धिः १।३।२३ ॥" इति सूत्रे दृष्टिपथमवतरतः । इह शुभशब्ददर्शनात् शुभाक्षिप्तेन ग्रहेण अर्गला विशिष्यते, आहोस्वित् प्रतिबन्धकाभाववत्तया शुभेनैव सा विशिष्यत इति भवति भावुकानां संशयावसरः । तत्र च 'भय ( २ ) पुण्य ( ११ ) विना ( ४ ) भावाद् द्रष्टुराहुः शुभार्गलम् । स्फुट ( १२ ) गो ( ३ ) हेय ( १० ) भावात्तु विपरीतार्गलं विदुः ॥' 'यस्य पापः शुभो वापि ग्रहस्तिष्ठेच्छुभार्गले । तेन द्रष्ट्रेक्षितं लग्नं प्राबल्यायोपकल्प्यते । यदि पश्येद्ग्रहस्तं न विपरीतार्गलस्थितः॥' इति वृद्धश्लोकाभ्यां प्रतिबन्धकस्य सत्त्वासत्त्वाभ्यां यथाक्रममर्गलस्य पापापापत्वे स्पष्टं ज्ञायेते । परं 'सार्गले चापि तत्रापि बह्वर्गलसमागमे । शुभग्रहार्गले तत्र तत्राप्युच्चग्रहार्गले ॥' इति वृद्धश्लोकेन शुभग्रहकर्तृकोऽर्गलः शुभार्गल इत्यपि व्यक्तम् । निराभासार्गलयेति सूत्रे आभास ( स् ) शब्दः प्रतिबन्धार्थकः सर्वैराश्रित एव तेनार्गलाप्रस्तावेऽवश्यं तत्प्रतिबन्धकाः । अर्गलो हि कारकादिवरफलप्रयोजकः तत्प्रतिबन्धो हि फलविघटक इति कनककटकादितमनुनेति तत्त्वम् । साभासार्गलो विपरीतार्गलो दुष्टार्गल इत्यादय एकाभिप्रायाः । वैपरीत्याभिराभासार्गलादयः । तथा च निराभासार्गलः शुभार्गल इत्येकाभिप्रायकौ पर्यवसन्नौ । परमियानिह भेदः—पूर्वसूत्रेऽर्गलस्य सर्वथा प्रतिबन्धः, परसूत्रे बह्वर्गलसमवाये एकाधिकस्येति विशेषः । अत्र दिष्ट्या धनसमृद्धिः, इत्यधिकन्यूनफलनिरूपणं मानम् । अत्रापि 'दिष्ट्याम्ब ते कुक्षिगतः परः पुमान्' इति 'योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे' इति 'ऋद्धिः स्यादोषधीभेदे समृद्धावपि योषिति' इति च शक्तिग्राहकाणि मानम् । अपि च । सूत्रयोरेकभावोन्मुखतायामेवं व्याख्यानं समञ्जसम् । अथवा शुभग्रहकर्तृकार्गलाङ्गीकारेऽपि निर्वाहः । परमिह सौत्रमर्यादया अर्गलेन दृष्टिमाक्षिप्य व्याख्यानं तु सूत्राकुलीकरणमेव । वृद्धवाक्यस्वारस्यादिति चेत्, तदा सूत्रान्तरप्रणयनमेव परिणमतीति वृद्धवाक्येभ्य एव निधेयम् ॥

द्रष्टुः

| | अर्गलास्थानानि | तत्प्रतिबन्धकस्थानानि । | |
|---|---|---|---|
| (१) | ४ | १० | मिथ्यार्गलाः । |
| (२) | २ | १२ | |
| (३) | ११ | ३ | |
| (४) | ३ | ० | =शुद्धार्गला । |
| (५) | ५ | ९ | =मिथ्यार्गला । |

१, ६, ७, ८=निर्गलानि स्थानानि ।

अत्र केचिद् दारसूत्रे शान्त ( $\frac{६५}{१२}$=५ ) पदं रिष्फसूत्रे धातु ( $\frac{६९}{१२}$=९ ) पदं प्रक्षिप्यैकयोगकरणं पूर्वपक्षयित्वा 'विपरीतं केतोः' इति सूत्रस्य त्रिकोण एव प्रवृत्तिं निश्चिन्वन्ति। अन्ये पुनः 'प्राग्वत्त्रिकोणे' इति सूत्रस्य पृथक्करणसामर्थ्यादप्रतिबन्धेयमर्गलेति वर्णयन्ति। विपरीतमिति सार्वत्रिकमित्यङ्गीकुर्वन्ति। तदेतद् द्वितीयमपि पूर्वे न सहन्ते युक्तितदाभासैः। इतरे पुनर्मध्येपवादन्यायाश्रयणेन 'न न्यूना विबलाश्च' इति सूत्रप्रवृत्तिं वारयन्तः प्राग्वत्त्रिकोण इत्यस्याप्रतिबन्धकत्वमिच्छन्ति। तदेतत्सर्वं समयान्तरेण ग्रन्थाकुलीकरणम्। यदिहास्माकं वक्तव्यं तत्प्रागुक्तं किमत्र शुष्ककलहेनेति स्वस्थैरालोकनीयम्॥

## अथार्गलाचक्रम्।




जन्मकुण्डल्यां हि विचार्यं तुलराशेः मकाराशचतुर्थे शुभः, द्वितीये सूर्यबुधकेतवः, एकादशे गुरुरस्ति। अथ च तत एव तुलराशेः सव्यानुक्रमेण दशमे ग्रहाभावः, द्वादशे भौमो बाधकत्वेनास्ति सूर्यबुधकेतुभ्यो न्यूनसंख्य, तृतीये शनिर्बाध्यभूतगुरोरेकस्य दुर्बलत्वात् बाधकाभावात्मकनमावर्गपर्यन्ता जाता। एवं प्रथमद्वितीयतृतीयचतुर्थपञ्चमनवमैकादशद्वादशभावेष्वर्गला बोध्याः। सप्तमदशमभावौ निरर्गलाविति विचार्यमिदम्।

अथ ग्रहार्गलाचक्रम् ।

| सू. | चं. | मं. | बु. | गु. | शु. | श. | रा. | के. |
|---|---|---|---|---|---|---|---|---|
| श. मं. | बृ. मं. | श. | श. मं. | मं. सू. बु. के. श. | चं. रा. गु. बु. के. | ० | बृ. मं. | बृ. |

अथ फलविशेषप्रतिपादकाननित्यकारकान्विवक्षुरादौ तदुपजीव्यभूतमात्मकारकं तदुत्कर्षतां चानुष्टुभाह—

अंशप्रभृतिभिर्ज्यायान्मध्ये गगनचारिणाम् ।
आत्मकारकसंज्ञः स्यात्स ईष्टे बन्धमोक्षयोः ॥ ९ ॥

अंशप्रभृतिभिरिति—ज्यायान् ज्येष्ठः अंशादिविकलान्तावयवेनाधिक इति यावत् । अत्र विशेषस्तत्तत्सूत्रार्थान्तःपाती द्रष्टव्यः ॥ ८ ॥

आत्माधिकः कलादिभिर्नभोगः सप्तानामष्टानां वा ॥ १।
१।११ ॥ स ईष्टे बन्धमोक्षयोः ॥ १।१।१२ ॥

रव्यादीनां शन्यन्तानां सप्तानां, राह्वन्तानामष्टानां वा मध्ये यो नभोगः खेटः कलादिभिः, कलाया आदयोऽवयवास्तैरधिकः स आत्मा । आत्मकारक इत्यर्थः । अथवा 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्' इति न्यायेन कलाद्यन्त एवांशवत्तमः । अन्यग्रह इव राहुर्मेषादिक्रमगणनयाऽधिकांशः कारको न भवति । मीनादिविपरीतगणनया तु भवत्येव । अयमर्थः—विपरीतगणनाया व्यवहाराभावाद् गणितागतो राहुः क्रमगणनार्थं सौरशास्त्रादौ चक्रशुद्धः क्रियते । ततोऽयं विशेषः । स आत्मकारको बन्धमोक्षयोः, बन्धो दुःखविशेषः, मोक्षः सुखविशेषः, तत्र ईष्टे समर्थो भवति । सुखदुःखदानाय समर्थः स्यादित्यर्थः । तथा चोक्तं केशवेन— 'नीचारिक्रूरसंबन्धाद् बन्धकृत्स्वदशास्वयम् । सुहृत्स्वाम्योच्चसंबन्धाद् बन्धानां मोक्षकारकः ॥' इति ।

अत्रेदमालोचनीयम्—शन्यन्ताः सप्त, राह्वन्ता अष्ट खेटाः कारकत्वभाजो भवन्ति । राहुकेत्वोरेकत्वेनैव गणना । कारकत्वसंपादने ताजिकीयमुथशीलप्रभृताविवांशादिविकलान्तावयवानामेव विवक्षणाद्, इतरत्र भगणस्यैवेह राशेरनङ्गीकरणात्, तयोरंशादिशरीरत्वाद् । तत्र सूर्यादितत्पुत्रान्ताः सप्तैव खेटाः वराहमिहिरादिकेशवान्तपौरुषकृतिषु व्यवह्रियन्ते । यत्तु क्वचित्तमोग्रहस्य संग्रहः स तावत्सांहितिक इति संभावयामः । तत एव 'मयन्यवन मणित्थ शक्तिपूर्वैः'—इत्यादिपूर्वानुबद्धनिबन्धप्रणयनशैली श्रद्धेयमिहिराचार्यचरणैः स्वजातके ग्रहाह्वकेत्वोर्नामानि परिगा-

प्यापि व्यवहाराभावोऽरोधि, तेन तदुपजीव्यानां मयादीनां जातकेष्वपि तयोस्तया· विधता परिणमतीत्यादि भृशं विचारणीयम्। इत्यच क्वचन सप्त, क्वचन नव ग्रहाश्रि· राय व्यवहृता । तत्र सप्तखेटवादे केशवादिमते सूत्रेष्वष्टानां कारकाणामुपलम्भाद् 'मात्रा सह पुत्रमेके समामनन्ति ॥ १।१।२०॥' इति रीत्या मातरि पुत्रान्तर्भावेन योजना। मतान्तरे तु पितृकारकाभावेन यथासंख्य योजना। नवखेटवादे केशवा· दिमते यथासंख्यमेव योजना। मतान्तरे तु 'तस्य दाराश्च ॥ १।१।१९॥' इति चका· रानुप्रेन कारकान्तरेण निर्वाह इति विवेक । द्विजटीकाना भिन्नमातृकेषु पद्यपुस्तकेषु पितृकारकादर्शनेनेत्थ वक्रमार्गानुसरणम्, अन्यथा सुखेनैव योजनेति निष्कण्टक पन्थाः। मुनीन्द्रस्तु नवखेटवादमनुगृह्णाति। यतस्तत्र राहुकेतू व्यवहरति। एतेन पितृकारकापेक्षी सूत्रग्रन्थः'—अष्टाना वा' इति विकल्पकोटिस्तु तदानीं जातकस्कन्धे नवखेटवादस्य नूतनता प्रचारप्राचुर्याभाव वा प्रकाशयतीति सक्षेप ।

अथावशिष्टानिलकारकाननुष्टुब्भ्यामाह—

> ततोऽमात्यभ्रातृमातृपुत्रज्ञातिस्त्रियो मताः।
> क्रमेणोनांशका मातर्यात्मजो योज्यते परैः ॥ ८ ॥
> किं वाऽमात्यभ्रातृमातृपितृपुत्रस्वदारकाः।
> क्रमान्न्यूनांशका मातृपुत्रैक्यं कैश्चिदिष्यते ॥ १० ॥

तत इति—आत्मकारक पूर्वोक्त , अमात्य , भ्राता, माता, पिता, पुत्र , स्त्री ज्ञाति , दारा स्त्री, इत्यष्टौ कारका यथाक्रममुत्तरोत्तरं न्यूनांशा भवन्ति। तत्र मातृ· पुत्रैक्यमपरैरिष्यते। अथ कारकाणामुद्देश केशवानुसारी। तथा च तद्वाक्यम्— 'आत्मकारकतो न्यूनोऽमात्यसञ्ज्ञो लवादिके । ततो भ्रातुस्ततो मातुस्ततस्तात्स्य का· रक ॥ तत सूनोरतो ज्ञातेरस्मात्पत्न्याश्च कारक । स्यान्मातृसुतयोरेके कारकैक्य वदन्ति हि' ॥ ९—१० ॥

तस्यानुसरणादमात्य ॥ १।१।१३ ॥ तस्य भ्राता ॥ १।१।१४ ॥ तस्य माता ॥ १। १।१५ ॥ तस्य पिता ॥ १।१।१६ ॥ तस्य पुत्र ॥ १।१।१७ ॥ तस्य ज्ञाति ॥ १।१। १८ ॥ तस्य दाराश्च ॥ १।१।१९ ॥ मात्रा सह पुत्रमेके समामनन्ति ॥ १।१।२० ॥

तस्य आत्मकारकस्य अनुसरणात् पश्चाद्गमनात् आत्मकारकापेक्षया न्यूनभागत· यावस्थानाद् अमात्योऽमात्यकारक स्यात्। एवमेव सूत्रपाठक्रमेण भ्रात्रादिदारान्ता षट् कारका यथोत्तरं न्यूनभागा भवन्तीति समुदितार्थ । अत्र द्वयोरंशादिना साम्ये एकस्य बलवत्तया कारकत्व परस्य नान्यकारकत्वमपि। एवं चैकस्य द्वयोर्बहूनामकार· कत्वे सप्तानामष्टानामित्युभयैकद्वित्र्यादय कारका लुप्यन्त एवेति कतिपये। बलवत्वे· नैवैकस्य कारकत्वान्नीकारेऽवशिष्टस्यानुसरणवद् गुणभावे सिद्धेऽन्यकारकताया को दोष इत्यपरे। अनुसरण हि प्रधानभावत्याग । अत्र दारकारकप्रतिपादकसूत्रगतचकारोऽनुक्त· समुच्चयार्थक आस्ताम्। परं पाणिनितन्त्र इव सर्वत्र सूत्राक्षरवर्णनासम्भवेन पद्दर्श·

न्यायमिवेहापि यथासंभवं योजना व्याख्या। अत एव मतिमान्द्याद्वा पूर्वपक्षमुद्भाव्य सूत्रन्यासार्थमस्माभिरुदाशीति विभावनीयं विवेकिभिः। मातृपुत्रकारकयोरैक्यमेके वाञ्छन्ति। तेषां मते पुत्रकारकाभावान्मातृकारकात्तद्विचारः स्यादित्यर्थः॥

अथ पादोनार्याद्वितयेन नित्यकारकांश्चरमचरणेनार्गलाद्युपयुक्तनैसर्गिकबलं चाह—

भगिनीजननीस्यालानुजाः कुजान्मातृसंनिभादिबुधात्।
पितृजनको वागीशात् पत्नी पितरौ पतिः श्वशुरौ॥ ११॥
मातामहाश्च शुक्रात् पुत्रा मन्दाद्विचारमर्हन्ति।
इति नित्यकारकौघो मन्दो ज्यायान्ग्रहेषु मतः॥ १२॥

भगिनीति—भगिनीमातुर्मातृसहोदर्या मातुलस्य च कन्या, जननी माता, स्यालः पत्नीभ्राता, अनुजः कनिष्ठो भ्राता। एते खलु कुजाद् विचारमर्हन्ति। एतेषां शुभाशुभविचारो भौमेन कर्तव्य इत्यर्थः। मातृसंनिभा मातृसदृशाः। आदिना मातुलादयो यथासंभवं विज्ञेयाः। पितृजनकः पितामहः माता च पिता च पितरौ; मातापितरावित्यर्थः। श्वश्रूश्च श्वशुरश्च श्वशुरौ; श्वश्रूश्वशुरावित्यर्थः। उभयत्रैकशेषः। ग्रहेषु मन्दः शनिः ज्यायान् अतिवृद्धः; दुर्बल इति यावत्। 'वर्षीयान् दशमी ज्यायान्' इत्यभिधानात्। एवं सूर्यादिषु यथोत्तरं दुर्बला भवन्तीत्युक्तं भवति। यथा पूर्वमीमांसायां श्रुतिलिङ्गादिसमवाये पारदौर्बल्यम्। लोकेऽपि बलाबलविचारणायां वर्षीयान् दुर्बलो मन्यते। अत्र बहुभिः 'श-कु-बु-गु-शु-च-राद्या वृद्धितो वीर्यवन्तः' इति मिहिरोक्तो बलक्रमः प्रादर्शि। शेषं स्पष्टम्॥

अत्र यत्र तत्र व्याख्यातृभिर्होरास्कन्धीया बहवो विशेषा लिखिताः; ते प्रायो बृहज्जातक—पाराशरीयहोराभ्यां नातिरिच्यन्ते। तत्र बृहज्जातकस्यादितोऽध्यायद्वयी परिभाषारूपैव। वृद्ध्यादिसंज्ञाज्ञानमन्तरा व्याकरण इव, यामन्तरेण होरास्कन्धे व्युत्पित्सुः पदमपि निधातुं न क्षमते; किमुतोत्सर्गापवादप्रसृतिमीमांसाजालजटिलासु शास्त्रीयासु प्रमेयसरणिषु सञ्चरितुम्। एवं विशेषाभिधित्सया प्रवर्तमानेऽमुष्मिञ्छास्त्रे प्रवेशकृते यावज्जातकज्ञानमावश्यकं तावदन्यतो ग्राह्यं, न तत्साकल्येन लिखितुमायातीति विरम्यते। पाराशरं होराशास्त्रं तु सांप्रतमलब्धं दुर्व्यवस्थितं दृष्टिपथमवतरति। पौर्वापर्यपर्यालोचनया प्रबन्धान्तरसंवादगवेषणया च तत्रत्यो भूयांस्तेषोऽनार्षशङ्कां समाधिकोटिं गमयति। यद्यपि संहितास्कन्धनिक्षिप्तश्रौतस्मार्तमुहूर्तभार इवायं हौरिको विषयो नैकान्ततो मूलवचनापेक्षी; प्रत्युतार्षः पौरुषो वा दृष्टप्रत्ययतयैव प्रेक्षावतामपेक्षागोचरः; तथापि ग्रन्थेषु नूनेषु च वाक्यजालेषु फलसंवादतारतम्यभावबुभुत्सया भवति भावुकानां मूलतत्त्वावगाहिनी मनीषा। अस्मत्स्वोदन स्मार्तार्पजातमवगत्य प्रतन्यमानेषु धर्मशास्त्रनिबन्धेष्विव अत्रापि दुराग्रहमहापिशाचा दुष्कल्पनाजल्पजालेन पराक्रान्ता। धर्मव्यवस्थेव दुरवस्थामापन्ना फलितावस्था। सूक्ष्मतरतमयष्ट्र्यप्रविवेकैर्विदुषामनुभवैः प्रतिष्ठाप्यमानो गणितस्कन्ध इवायं फलितक्रमोऽपि महानु-

भवेकसाध्य इत्यतिरोहितं निर्णायकानाम्। एवं च प्राचामर्वाचां च सूक्तिदर्पणेषु सङ्क्रान्तानि दुरुक्तिमलान्यपोह्यापोह्य, पारमार्थिकं वस्तु समवलोक्य समवलोक्य, समवधानपुरस्सरं फलमादेष्टव्यम्। न पुनर्मनसापीदानींतनानां दैवज्ञहतकानामभिसंधानसरणी शरणीकरणीया फलितनिधिकामुकैः ॥ ११।१२ ॥

भगिन्यारतः श्यालः कनीयाञ्जननी च ॥ १।१।२१ ॥
मातुलादयो बन्धवो मातृसजातीया इत्युत्तरतः ॥ १।१।२२ ॥
पितामहपतिपुत्राविति गुरुमुखादेव जानीयात् ॥ १।१।२३ ॥
पत्नी पितरौ श्वशुरौ मातामहा इत्यन्तेवासिनः ॥ १।१।२४ ॥
मन्दो ज्यायान् ग्रहेषु ॥ १।१।२५ ॥

आरतो भौमाद् भगिन्यादयो विचार्याः। उत्तरतो भौमाग्रे वर्तमानाद् बुधाद् मातुलप्रभृतयो विचार्याः। गुरुमुखाद् बृहस्पत्यादे —पितामह, पति, पुत्र इति यथाक्रमं जानीयाद् विचारयेत्। अयमर्थः —गुरुतः पितामहम्, शुक्रतः पतिं स्वामिनम्, शनितः, पुत्रं विचारयेदिति। पत्नीप्रभृतयः, अन्ते प्राक्पठितस्य गुरोरग्रे वसति, चारक्रमेण तिष्ठतीति अन्तेवासी शुक्रस्तस्माद्विचारणीयाः। ग्रहेषु चारक्रमेण सप्तसु रव्यादिशन्यन्तेषु मन्दः शनिर्ज्यायान् दुर्बल इति प्रतिपादितं प्राक्। चारक्रमयुक्तिस्तु 'मन्दादधः क्रमेण स्युश्चतुर्था दिवसाधिपाः' इति सौरोक्तैव। राहुकेत्वोर्ग्रहत्वेन व्यवहारेऽभीष्टेऽपि बलविधायकशास्त्रापर्याप्ततयानुक्तिः। तत एव पद्धर्गचिन्तायामपि नानयोरिलपि व्यक्तम्। तत्र रव्यादिवद्बिम्बाभावोऽनयोरधिकाराभावप्रयोजक इत्यपि हेतुमुपन्यस्यन्ति केचित्। आस्तां राहुकेत्वोस्तादृशबिम्बाभावस्तेनाधिकाराभावः। सप्रति ग्रहत्वेन निर्णीतस्येन्द्रादेः कस्याप्यधिकारचिन्ता। बिम्बवत्त्वे सति पूर्वगतिप्रकृतिकस्य ग्रहत्वस्योभयत्र साम्यात्। सत्यम्। संहिताक्रोडपातिनि श्रौतस्मार्तक्रियाकलापे पौरुषशासनस्यानादरादित्यभ्युपेयम्। स्मर्यते हि—

'अतीन्द्रियार्थविज्ञाने प्रमाणं श्रुतिरेव हि।
श्रुतिर्येन प्रमाणं स्याद्युक्तिः का तत्र नारद ॥'

इत्यादि ॥

अथ सप्तानां कारकाणां चक्रम्।

| आत्मा | अमात्य | भ्राता | माता | पुत्र | ज्ञाति | दारा |
|---|---|---|---|---|---|---|
| सूर्य | बुध | शनि | मङ्गल | चन्द्र | गुरु | शुक्र |

अथाष्टानां कारकाणां वा चक्रम्।

| आत्मा | अमात्य | भ्राता | माता | पिता | पुत्र | ज्ञाति | दारा |
|---|---|---|---|---|---|---|---|
| सूर्य | बुध | शनि | मङ्गल | चन्द्र | गुरु | राहु | शुक्र |

अथ वक्ष्यमाणचरदशागणनां द्रुतविलम्बितेनाह—

भवति भत्रितयेन भमण्डले
पदचतुष्टयमोजपदे क्रमात् ।
समपदे तु विलोमत इष्यते
चरदशानयने गणनाविधिः ॥ १३ ॥

भवतीति—भमण्डलं राशिवलयम् । तदेतत्समं द्वादशधाविभक्तं किल । तत्र मेषादिमारभ्य भत्रितयेन राशित्रयेण पदं भवति । तच्चतु:संख्याकम् । एतदुक्तं भवति—मेषवृषमिथुनैः प्रथममोजपदम्, कर्कसिंहकन्याभिर्द्वितीयं समपदम्, तुलावृश्चिकधनुर्भिस्तृतीयमोजपदम्, मकरकुम्भमीनैश्चतुर्थं समपदम्, एवं चौजपदे क्रमाद् अनुलोमाद्, समपदे विलोमाद् गणना क्रियते खलु चरदशानयने । तदेतत्सर्वमुदाहरणावसरे स्पष्टं भविष्यति ॥ १३ ॥

अथ वृद्धवाक्यबलेन राशिस्वाम्ये विशेषं द्रुतविलम्बितेनाह—

अवनिसूनुकबन्धनभश्चरौ
निगदिताविह वृश्चिकनायकौ ।
शनि-शिरोद्युचरौ कलशेश्वरा-
वितरनाथकथा तु यथा तथा ॥ १४ ॥

अवनीति—अवनिसूनुर्भौमः । कबन्धनभश्चरः केतुः । देवासुरसमवायेऽमृतपरिवेषणसमये भगवॉश्चक्रपाणिश्चक्रेण कस्यचिदसुरस्य शिरश्चिच्छेद । तत्र शिरोभागो राहुः, कबन्धभागः केतुरिति पौराणिकाः । तथा च कबन्धश्चासौ नभश्चरश्चेति कबन्धनभश्चरः । एषोऽसुर एव । संहितायां तु—'शतमेकाधिकमेके सहस्रमपरे वदन्ति केतूनाम् । बहुरूपमेकमेव प्राह मुनिर्नारदः केतुम् ॥' इति विशेषः । ताविह वृश्चिकस्वामिनौ स्मृतौ । शनिः, शिरोद्युचरो राहुः । पूर्ववत्समासः । एतौ कुम्भस्वामिनौ । तथा च वृद्धः—'कुजसौरी केतुराहू राजानावलिकुम्भयोः' इति । राहोर्ग्रहता संहितायामेवमाम्नाता—'अमृतास्वादविशेषाच्छिन्नमपि शिरः किलासुरस्येदम् । प्राणैरपरित्यक्तं ग्रहतां यातं वदन्त्येके ॥' ग्रहोऽस्त्यसौ भगवान् गर्गस्तु—'राहुः स्वर्भानुपुत्रः स्यात्पुत्रः केतुर्विभावसोः । मनसा ब्रह्मणा ख्यातावुभौ सोमदिवाकरौ ॥' इत्याह स । इतरेषां नाथानां कथा तु यथा बृहज्जातकादिग्रन्थे तथैवात्रापि बोध्या । प्रश्नभैरवे तु—'अङ्गीकृतं सौम्यगृहं सुहृत्त्वात्कन्याह्वयं तच्च विधुन्तुदेन । तत्सप्तमं वा शिखिना गृहीतं गृहं तु तन्मीनगृहाभिधानम् ॥' इति मैत्रीप्रतिपादनपूर्वकं राहोः कन्या, केतोर्मीनः क्षेत्रमाख्यायते । तत्र मित्रविषये **सर्वार्थचिन्तामणौ**—'राहोस्तु मित्राणि कवीज्यमन्दाः, केतोस्तथैवात्र वदन्ति तज्ज्ञाः ॥' इत्यनेन तयोः समानमित्रता निरूपिता । ततोऽयं मतभेदः—वृद्धवाक्ये वृश्चिकक्षेत्रे कुजकेत्वोः, कुम्भभवने शनिराह्वोः स्वाम्यम् । प्रश्नभैरवे तु राहोः कन्यायां केतोर्मीने स्वाम्यम् । तत्पूर्वत्र चक्रराशिव्यवहितं, परन

षड्राशिव्यवहितम्, उभयत्रापि व्यासज्यवृत्तिकं भवति। भैरवे साम्यघटकतया सुहृत्त्वं हेतुरुपात्त, चिन्तामणौ तु न कोऽपि। भैरवे राहुकेत्वोः सुहृदौ बुधगुरू, चिन्तामणौ तु बुधमुपेक्ष्य शुक्रोऽपीति। अपि च **प्रश्नभैरवे**—'स्वातिसिंहिकायाः स्तनयस्य तुङ्गं नृयुग्मसञ्ज्ञं बुधदैवतं च। पुच्छस्य केतोर्गदितं च तुङ्गं तत्कार्मुकाख्यं गुरुदैवतं च ॥' इति तयोस्तुङ्गे उक्ते। ते चरदशासाधने सम्प्रति कैश्चिदपि नाद्रियेते। **बृहज्जातकोक्तान्येव** तुङ्गान्युपादाय दशा प्रवर्त्यते। तुङ्गसापेक्षं वृद्धवाक्यं यथा—'उच्चखेटस्य सद्भावे वर्षमेकं विनिक्षिपेत्। तथैव नीचखेटस्य वर्षमेकं विशोधयेत् ॥' इत्थं च वर्तमानरीतिप्रतिकूलव्याख्यान्तरलाभे ह्युपादेयतया सशयावतरणमिति मूलान्वेषणे ज्यायसी विप्रतिपत्तिकोटिः। अत एव मतिकर्दमभेदुरे मतान्तरतिमिराच्छन्ने वर्त्मनि परम्परया वृद्धपृष्ठानुसरणमेव शरणं मन्यामहे। तथा चोक्तमाचार्यचरणैः—"ज्यौतिषमागमशास्त्रं विप्रतिपत्तौ न योग्यमस्माकम्। स्वयमेव विकल्पयितुं, किन्तु बहूनां मतं वक्ष्ये" ॥ १४ ॥

अथ चरदशावर्षसङ्ख्या सविशेषा द्रुतविलम्बितेनाह—

**भवति लग्नमुखादिह राशित-**
**स्तदधिपावधिकाऽब्दमितिर्दशा।**
**स्वगृहगेऽधिपतौ तु विलोचना-**
**मृतमयूखसमा हि समा मता ॥ १५ ॥**

भवतीति—इह जातकविषये लग्नमुखाद् राशितो लग्नद्वितीयादितः सकाशात् तदधिपावधिका तन्नाथावसानिका अब्दमितिर्वर्षसङ्ख्या दशा चरदशा भवति। चलनाचराख्या। तथा च वृद्धवाक्यम्—"तस्मात्तदीशपर्यन्तं सङ्ख्यामब्दं दशां विदुः। वर्षं द्वादशकं तत्र, न चेदेकं विनिर्दिशेत् ॥" अयमाशयः—कस्मिंश्चिद्राशौ सकाशात्तत्स्वाम्यधिष्ठितराशिपर्यन्तमेकादिगतराशिगणनया क्रमोत्क्रमाभ्यां यावती सङ्ख्या लभ्यते, तत्प्रमाणानि दशावर्षाणि। एवं द्वादशे स्वामिनि एकादशवर्षाणि। तत्र स्वराशौ स्वामिनि तु द्वादश दशावर्षाणि। 'न चेदेकं विनिर्दिशेत्' इति पूर्वानुवादः। चेद् राशिस्वामी तत्र राशौ न स्यात्तर्हि एकादिकं पूर्ववद् दशावर्षमिति तदर्थः। विशेषस्तूदाहरणावसरे ॥ १५ ॥

**प्राची वृत्तिर्विषमभेषु ॥ १।१।२६ ॥ परावृत्त्योत्तरेषु ॥ १।१।२७ ॥ न क्वचित् ॥ १।१।२८ ॥ नाथान्ताः समाः प्रायेण ॥ १।१।२९ ॥**

चरदशावर्षानयने विषमभेषु मेषमिथुनसिंहतुलाधनुःकुम्भेषु, प्राची वृत्तिः प्रागावर्तनमनुलोमगणना स्यादित्युत्सर्गः। उत्तरेषु विषमराश्यपेक्षया पुरो वर्तमानेषु समभेषु वृषकर्ककन्यावृश्चिकमकरमीनेषु, परावृत्तिः परावर्तनं, तया परावृत्त्या प्राची वृत्तिवैपरीत्येन, गणना विलोमगणना स्यादित्युत्सर्गः। विषमराशिषु क्वचिदनुलोमगणना न स्यात्। समराशिषु क्वचिद् विलोमगणना न स्यादित्यपवादः। क्वेति सन्देहव्युदासार्थं

'पदक्रमात् प्राक्प्रत्यक्त्वं चरदशायाम्' इति सूत्रावेदितेन क्रमाद् वृषे वृश्चिके च व्युत्क्रमाद् कुम्भसिंहयोः इति वृद्धवचनेनायमर्थः । सिध्यति—

ओजपदे

१
(१) २ समपदे
३
(प्राग्वीथिः) ४ ५ ६ (पराग्वीथिः) (२)
(३) ७ ८ ९
१०
११ (४)
१२

तथा च वृद्धाः—समाः तत्तद्राशीनामब्दाः नाथान्ताः । नाथः अन्तो यासामिति सर्वादिवत्तद्गुणसंविज्ञानो बहुव्रीहिः । तत्तद्राशेः सकाशादतीतक्रमेण तत्तद्राशिनाथाश्रितराशिपर्यन्ता अब्दा ग्राह्याः । एवं च नाथे द्वितीये एकोऽब्दः, तृतीये द्वावब्दौ, इति क्रमेण द्वादशे एकादश अब्दाः । प्रायेणेति पदेन नाथे स्वराशौ तिष्ठति द्वादशाब्दाः, वृश्चिककुम्भयोर्द्विनाथत्वम्, उच्चनीचलाभ्यामेकैकाब्दवृद्धिह्रासौ चेति सूच्यते । तथा च वृद्धवाक्यान्यग्रोक्तानि । वस्तुतस्तु द्विनाथत्वं वृद्धिह्रासश्चेति सूत्रतो न लभ्यते ।

अथ द्रुतविलम्बितेन विशेषमाह—

अधिपतिर्यदि उच्चगनीचगो
हसति वर्धत एकसमा तदा ।
इति च वृद्धनिरूपितकारिका-
कलनतः कलयन्ति विचक्षणाः ॥ १६ ॥

अधीति स्पष्टम् ॥ १६ ॥

अथ द्विस्वामिकराश्योर्निर्णयं श्लोकपञ्चकेन संगृह्णाति—

द्विनाथक्षेत्रयोरत्र क्रियते बलनिर्णयः ।
एकः स्वक्षेत्रगोऽन्यस्तु परत्र यदि तिष्ठति ॥ १७ ॥
तदान्यत्रास्थितं नाथं परिगृह्य दशां नयेत् ।
नाथौ स्वक्षेत्रगावेव दद्यातां द्वादशाब्दकान् ॥ १८ ॥
स्वाम्यं स्वीक्रियते यस्मात्तयोर्व्यासज्यवृत्तिकम् ।
द्वावप्यन्यर्क्षगौ तौ चेत्स ग्रहो बलवान्भवेत् ॥ १९ ॥

ग्रहयोगस्य सत्वेऽपि बलवान्बहुयोगवान् ।
पञ्चमध्यागते साम्ये विद्याद्राशिवशाद्बलम् ॥ २० ॥
चरस्थिरद्विस्वभावा राशयो बलिनः क्रमात् ।
राशिवीर्यसमत्वे तु बहुवर्षप्रदो बली ॥ २१ ॥
एकः स्वोच्चगतोऽन्यस्तु परत्र यदि वर्तते ।
तदा तूच्चगतो ग्राह्यो न चान्यो बलवानपि ॥ २२ ॥

द्विनाथक्षेत्रयोरित्यादि—यस्मात्तयोर्व्यासज्यवृत्तिक साम्य स्वीक्रियते वृद्धे, न तु प्रत्येक पर्याप्तम् । वस्तुतस्तु नाय बलक्रम सूत्रमर्यादया व्यवस्थापयितु योग्य इति सूक्ष्मदृशा निरीक्षणीयम् ॥ १७–२२ ॥

अथ वृद्धमतमुपसहरंश्चरदशारम्भस्थान तल्लेखनक्रम तदन्तर्दशाप्रमाण केतो शुभत्व च सुन्दरीभ्यामाह—

इति वृद्धकृतं बलक्रमं
परिभाव्य प्रथयेज्जगद्दशाम् ।
गणना विदधीत लग्नतो
नवमर्क्षस्य पदक्रमादिह ॥ २३ ॥
प्रतिराशि दशामितेरितां
शक एकैकभभोगकल्पना ।
गणना तु यथानिरूपण
क्रमणा केतुरमुत्र शोभनः ॥ २४ ॥

इतीत्यादि—जगद्दशा चरदशा प्रथयेत् व्युत्पादयेत् । इह चरदशाया लग्नतो जन्मलग्नात् नवमर्क्षस्य नवमराशेः पदक्रमात् 'ओजपदे क्रमात् समपदे विलोमत —' इति प्रागुक्तप्रकारेण गणना विदधीत कुर्वीत । प्रतिराशि लग्नादिप्रत्येकराशिमध्ये दशा॰ शरन्मितेर्द्वादशभागा एकैकराशिभोगः स्यात् । प्रतिराशि तद्दशाद्वादशाश प्रत्येक॰ राशिभोग इति सर्वेषा समानो भोग केवल भोक्तरि व्यत्यास इति तत्त्वम् । अत्र चर॰ दशाया केतु शुभ ॥ २३–२४ ॥

पञ्चमे पदक्रमात्प्राक् प्रत्यक्त्वं चरदशायाम् ।२।३।३० ॥ अत्र शुभः केतुः ।२।३।३१ ॥ यावद्विवेकमावृत्तिर्भानाम् ।१।१।३५ ॥

चरदशाया पञ्चमे (=$\frac{५}{६}$२=९) लग्नाच्चवमे पदक्रमाद् विषमसमपदक्रमात् प्राक् प्रत्यक्त्वमनुलोमविलोमगणना स्यात् ॥ अत्र चरदशाया केतु शुभ ॥ भानां राशीना यावद्विवेक (=१४४) यावच्चतुश्चत्वारिंशदधिकशतसख्या तावदावृत्तिर्भवति । याव॰ दवधारण इत्यव्ययीभाव । एतदुक्त भवति—लग्नादिकस्य राशेर्यावती चरादिदशा साधिता तस्या द्वादशाशप्रमाणेनैकैकराशिभोगाः सभूय द्वादशराशीनामन्तर्भोगाश्चतु॰ श्चत्वारिंशदधिकशतभागा स्यु. ॥ अथ चरदशोदाहरण—'भवति लग्नमुखादिह

राशितस्तदधिपावधिकाऽब्दमितिर्दशा' इति सूत्रेण चरदशावर्षाणि साध्यन्ते तद्यथा—लग्नं मिथुनराशिस्तदधिपो बुधो वृश्चिकेऽस्ति, तेन गतराशिगणनया मिथुनस्य पञ्च वर्षाणि । कर्कस्वामी चन्द्रो वृषेऽस्ति, तेन कर्कस्य द्वे वर्षे । सिंहस्वामी सूर्यो वृश्चिकेऽस्ति, तेन सिंहस्य नव वर्षाणि । एवमग्रेऽपि । वृश्चिककुम्भयोस्तु 'अवनिसूनुक-बन्धनभर्त्रो' इत्यादिना द्विनाथत्वं भवति, तेन 'द्विनाथक्षेत्रयोरत्र'—इति प्रघट्टकेन । तयोर्दश वर्षाणि । तद्यथा वृश्चिकस्य स्वामिनौ कुजकेतू भवतः । तत्र केतुर्वृश्चिके एवास्ति कुजस्तु वृश्चिकादेकादशेऽस्ति तदा 'एकः स्वक्षेत्रगोऽन्यस्तु' इत्यनेन वृश्चिकस्य भौमावधिगणनया दशवर्षाणि सिध्यन्ति । कुम्भस्य स्वामिनौ शनिराहू । तत्र कुम्भ-स्वामी राहुर्वृषे शनिर्धनुषि तिष्ठति, तदा 'द्वावप्यन्यर्क्षगौ तौ चेत्सग्रहो बलवान् भवेत्' इति राहोः सग्रहत्वाद् राहुपर्यन्तगणनया कुम्भस्य नव वर्षाणि ज्ञेयानि । एवमव-शिष्टानामपि राशीनां दशावर्षाणि । तत्र दशालेखनक्रमः—'गणना विदधीत लग्नतो नवमर्क्षस्य पदक्रमादिह' इत्यनेन बोध्यः । तथाहि—जन्मलग्नकुण्डल्यां लग्नान्नवमे कुम्भो वर्तते स च समपदीयस्तेन विलोमगणना ज्ञेया । सा चैवम्—प्रथमं लग्नस्य मिथुनस्य, ततो द्वादशस्थस्य वृषस्य, तत एकादशस्थस्य मेषस्य । एवमग्रेऽपि वैपरी-त्येन लिपिः ।

### अथ चरदशा ।

| मि. | वृषः | मे. | मी. | कुं. | म. | ध. | वृश्चि. | तु. | कन्या | सिं. | कर्कः | योगः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ५ | ८ | ५ | ७ | ९ | ११ | ८ | १० | ३ | १० | ९ | २ | ७७ |
| १९३२ | १९४० | १९४५ | १९५२ | १९६१ | १९७२ | १९८० | १९९० | १९९३ | १९८५ | १९९५ | २००४ | २००६ |
| ७<br>२९<br>५१<br>२४ | ७<br>२९<br>५१<br>२४ | | | | | | | | | | ७<br>२९<br>५१<br>२४ | ७<br>२९<br>५१<br>२४ |

अत्र चरदशायामन्तराणि साध्यानि । तत्र 'अविरामदिशामिते' इत्यनेन सर्वराशी-नामन्तर्भोगकालस्तुल्य एव सिध्यति । केवलं गणनानुरोधेन राशीनां भोगमात्रप्रयुक्तं वैलक्षण्यम् । लेखनक्रमस्त्वन्तर्दशाविषयीभूततत्तद्राशितो नवमर्क्षस्य विषमसमपद-क्रमेण क्रमोत्क्रमगणनानुरुद्ध एवेति वर्तमाना रीतिः ।

अथ चरान्तर्दशारम्भक्रमभेदानुपजातिभ्यामाह—

लग्नास्तयोर्यद् बलवद्भमस्माज्जगद्दशापाकमुशन्ति सन्तः ।
लग्ने चरर्क्षे विषमेऽनुलोमात्समे विलोमात्स्थिरभे तु षष्ठात् ॥ २५ ॥
तथा द्विदेहे विषमे क्रमेण लग्नात्सुताद्भाग्यत एव पाकः ।
समे विलोमेन तनोः सकाशाद्भाग्यात्मजान्तो गणनाक्रमोऽयम् ॥२६॥

लग्नास्तयोरित्यादि—लग्नसप्तमयोर्मध्ये बलवतश्चरान्तर्दशा प्रारम्भणीया । अत्र लग्नेनाद्यदशाश्रयीभूतो राशिर्गृह्यते । तादृशे लग्ने चरे सति विषमभेऽनुलोमात् समभे विलोमात् गणना । लग्ने स्थिरे सति विषमसमराशिभेदात् क्रमोत्क्रमाभ्यां षष्ठषष्ठराशितो गणना । तथा लग्ने द्विस्वभावे सति विषमभे लग्नपञ्चमनवमेभ्यः समभे ▯ लग्ननवमपञ्चमेभ्यो गणना । अयमाशय —चरे मेषस्तुला वा बलवती ततः क्रमेणान्तर्दशा; कर्को मकरो वा बलवांस्तत उत्क्रमेणान्तर्दशा. । स्थिरे वृषतुलामीनसिंहमकरमिथुनवृश्चिकमेषकन्याकुम्भकर्कधनूषीति षष्ठषष्ठराशीना क्रमः । अत्र सिंहः कुम्भो वा बलवांस्ततः क्रमेणान्तर्दशा. । वृषो वृश्चिको वा तत उत्क्रमेणेति द्विस्वभावे मिथुनश्चेद्बलवान्, मिथुनकन्याधनुर्मीनाना तुलामकरमेषकर्क्णा कुम्भवृषसिंहवृश्चिकाना चान्तर्दशाः । कन्या चेद् बलवती, कन्यामिथुनमीनधनुषा वृषकुम्भवृश्चिकसिंहाना मकरतुलाकर्कमेषाणा चान्तर्दशा. । धनुश्चेद्बलवद्, धनुर्मीनमिथुनकन्याना मेषकर्कतुलामकराणा सिंहवृश्चिककुम्भवृषाणा चान्तर्दशा. । मीनश्चेद्बलवान्, मीनधनु.कन्यामिथुनाना वृश्चिकसिंहवृषकुम्भाना कर्कमेषमकरतुलाना च यथासूत्रं परिगणितानामन्तर्दशा विलेख्याः । एवं वक्ष्यमाणयो. स्थिरत्रिकोणदशयोरप्यन्तर्दशा गणनीयाः ॥ अत्र वृद्धाः—

चरेऽनुज्झितमार्गः स्यात्षष्ठषष्ठादिकाः स्थिरे ।
उभये कण्टकाज्ञेया लग्नपञ्चमभाग्यतः ॥
चरस्थिरद्विस्वभावेष्वोजेषु प्राक्क्रमो मतः ।
तेष्वेव त्रिषु युग्मेषु ग्राह्यं व्युत्क्रमतो खिलम् ॥
एवमालिखितो राशिः पाकराशिरुदीर्यते ।
स एव भोगराशिश्च पर्याये प्रथमे स्मृतः ॥
लग्नाद् यावतिथः पाकः पर्याये यत्र दृश्यते ।
तस्मात्तावतिथो भोगः पर्याये तत्र गृह्यताम् ॥
तदिदं चरपर्यायस्थिरपर्याययोर्द्वयोः ।
*त्रिकोणाख्यदशायां च पाकभोगप्रकल्पनम् ॥*
पाके भोगे च पापाढ्ये देहपीडा मनोव्यथा, इति ।

पितृलाभप्राणितोऽयम् ॥ २।३।७ ॥ प्रथमे प्राक्प्रत्यक्त्वम् ॥ २।३।८ ॥
द्वितीये रवितः ॥ २।३।९ ॥ पृथक्क्रमेण तृतीये चतुष्टयादि ॥ २।३।१० ॥

पिता (=$\frac{६}{१}\frac{१}{}$=१) लग्नम्, लाभः (=$\frac{४}{१}\frac{३}{२}$=७) सप्तमः, एतयोर्मध्ये यः प्राणी बलवान् राशिस्तस्मादयं चरनवांशचरान्तर्दशा 'प्रथमे'—इत्यादिसूत्रत्रयेण निरूपितो

बोध्यः । प्रथमे चरराशौ लग्ने तत एव सप्तमे वा सति बलवल्लग्नसप्तमान्यतरस्माद् विषमसमराशिभेदेन प्राक् प्रत्यक्त्वं क्रमोत्क्रमगणने । द्वितीये स्थिरराशौ लग्ने सप्तमे वा सति बलवल्लग्नसप्तमान्यतरस्माद्विषमसमराशिभेदेन क्रमोत्क्रमाभ्यां रविः (=$\frac{६}{१}$$\frac{३}{२}$=६) षष्ठः ततोऽर्थात् षष्ठषष्ठराशिक्रमेण दशा प्रवर्त्या ॥ तृतीये द्विस्वभावराशौ लग्ने सप्तमे वा सति बलवल्लग्नसप्तमान्यतरस्माच्चतुष्टयादि केन्द्रादि पृथक्क्रमेण भिन्नभिन्नरीत्या पूर्वं लग्नसप्तमान्यतरकेन्द्रात् ततः पणफरात् ततो नवमापोक्लिमाद् विषमसमराशिभेदेन क्रमोत्क्रमाभ्यां दशा प्रवर्त्या ॥ सैषा चतुःसूत्री केन्द्रदशापरतया व्याख्यायते बहुभिः ॥

अथ चरान्तर्दशोपयोगि किञ्चिदुपजातिभ्यामाह—

> जगद्दशाया नवमांशपाके प्राणो द्वितीयः परिभावनीयः ।
> स्याद् द्वारबाह्ये मलिनोपपन्ने बन्धादिकं तस्य दशान्तराले ॥२७॥
> चेद् द्वारबाह्याश्रयतां प्रयातो जीवस्य सांनिध्यगतः स्वराशौ ।
> पापस्तदानीं नहि बन्धनादि भवेद्द्वयोगोदितमत्र चिन्त्यम् ॥ २८ ॥

जगदित्यादि—'दशाश्रयो द्वारमिति बाह्यस्तावतिथस्ततः' इत्यादिमे पञ्चम-प्रवाहे ॥ १—२ ॥

द्वितीयं भावबलं चरनवांशे ॥ २।४।१ ॥ तयोः पापे बन्धयोगादि ॥२।४।४॥ स्वर्क्षेऽस्य तस्मिन्नोपजीवस्य ॥ २।४।५ ॥ भग्रहयोगोक्तं सर्वमस्मिन् ॥ २।४।६ ॥

चरस्य चरदशाया नवांशेऽन्तर्दशायां द्वितीयं भावबलं फलार्थमुपादेयम् । 'बलं द्वितीयं पतिजीवचान्द्रिरयोगः' इति सप्तमप्रवाहे ॥ तयोर्द्वारबाह्यराश्योः पापग्रहे सति तद्दशामध्ये बन्धनताडनादि स्यात् ॥ तस्मिन् द्वारे बाह्ये वा राशौ पापाश्रिते अस्य उपजीवस्य गुरुसमीपवर्तिनः पापस्य स्वर्क्षे स्थितौ सत्यां बन्धनादि न स्यात् ॥ अस्मिन् द्वारे बाह्ये वा राशिग्रहयोगोदितं सर्वं फलमनुसन्धेयम् ॥ सैषा चतुःसूत्री चरराशिनवांशदशापरतया व्याख्यायते बहुभिः ॥

## अथ चरान्तर्दशोदाहरणम्—

अत्र लग्नसप्तमयोर्मध्ये सप्तमो धनूराशिर्बलवांस्तत उक्तप्रकारेण धनुषि धनुर्मीनमिथुनकन्यामेषकर्कतुलामकरसिंहवृश्चिककुम्भवृषाणामन्तरभोगः । भोगस्तु मा० ८ एतावानेव सर्वेषाम् । ततो बलानुरोधेन मकरसिंहकन्यातुलावृश्चिकेषु उक्तप्रकारेणैव द्वादशद्वादशराशीनामन्तर्भोगा लेख्याः । अग्रे तु एत एव पुनरावर्तन्ते । एवमुपदशा अपि गणनीयाः ॥

अथ फलविशेषप्रतिपादकं राशीनां पदमार्ययाह—

> अभिमतराशेर्यावति राशौ राशीश्वरोऽवतिष्ठेत ।
> तस्मादग्रे तावानारूढाख्यो भवेद्राशिः ॥ २९ ॥

अभिमतेति—अभिमतो लग्नादिर्विचारविषयीभूतो यो राशिस्तस्माद् गतगणनया यावति यत्परिमाणे एकद्वयादिसंख्ये राशौ राशेर्विचारविषयीभूतस्येश्वर स्वामी भवति· ष्ठेत वर्तेत, तस्मादधिष्ठानभूताद्राशेरग्रे गतगणनयैव तावान् तत्परिमाण एकद्वयादि· संख्य एव राशिरारूढाख्यो भवेत्। पदापरपर्यायारूढसंज्ञया व्यपदिष्ट स्यात् ॥ २९॥

अथ विशेषमार्ययाह—

**स्वामिनि चारिणि (४) चारि (४) द्यूने(७) पदमम्बर (१०) विशेषोऽ· यम्। सोऽस्त्वथापि वृत्तावुदाहृतित्वेन संकलित· ॥ ३० ॥**

स्वामिनीति—स्वामिनि विचार्यराशिनाथे चारिणि विचार्यराशितश्चतुर्थे वर्तमाने सति चारि चतुर्थगतो राशि पद स्यात्। एव द्यूने सप्तमे स्वामिनि तिष्ठति अम्बर दशमस्थो राशि पद भवेत्। विशेषोऽय सोऽत्र सूत्रागतो वर्तते। तथापि वृत्तौ नीलकण्ठादिरचितवृत्तिभ्र ये उदाहृतित्वेन पदलक्षणप्रतिपादकसूत्रस्योदाहरणतया संकलित पारगणित । तथाच नीलकण्ठ ॥—अथारूढोदाहरणरूप सूत्रद्वयमाह—'लग्नात्स्वस्थे चतुर्थस्थे लग्नस्वामिनि दारा सप्तमस्थो राशिर्लग्नारूढो भवति। लग्नात्सुतस्थे सप्तमस्थे लग्नस्वामिनि जन्मलग्नमारूढ भवतीत्यर्थ । यावदीशेति सूत्रेणैव सिद्धे एतत्सूत्रद्वय मुदाहरणद्वारा स्पष्टार्थं पठितमिति'। बालकृष्णानन्दस्वामी तु—'अथ भावेषु कारक विशेष कंचन दर्शयति—स्वस्थे दारा द्वितीये स्त्रीविचारणीयेत्यर्थ । तेन द्वितीयभाव स्त्रीकारकमिति यावत् । सुतस्थे जन्म। एकादशे ज्येष्ठभ्रातुर्जन्म विचार्य। तेन ज्येष्ठभ्रातृकारकमेकादशमिति यावत् । विशेषाद्ग्रहकारकविशेष दर्शयति—स्वस्थे स्व द्वितीय तत्रस्थे ग्रहे दाराश्चिन्तनीया । तथा च तत्रस्थो ग्रह स्त्रीकारक । तत स्त्रीविचार कर्तव्य इत्यर्थ । कारकात्सप्तमे दारा इति वार्थ । सुत पञ्चम तत्रस्थे ग्रहे पुनर्जन्म जानीयात्। पञ्चमग्रह पुत्रकारक इत्यर्थ । सुते सप्तमे तिष्ठतीति सुतस्थ । तस्मिन्सप्तमस्थग्रहे पुत्रजन्म स्त्रीजन्म भर्तृजन्म वा यथायोग जानीयादिति वार्थं । अनेन सूत्रद्वयेन भावकारका भावस्थग्रहात्मकारकाश्च सर्वे यथायोगमुपलक्षिता इति वेदितव्यम्, इत्याह स्म। 'सुखस्थे सुख द्यूनगे कमभ च' इति श्रीमानयोध्यानाथ सिद्धान्तयति । यस्माद्भावात्तत्स्वामी चतुर्थगस्तदा तत्स्वामितुल्यमेव पद स्यात्। यदि सप्तमगस्तदा स्वामिनि राशिनययोजनेन पद स्यादिति तदभिप्राय ॥ ३० ॥

**यावदीशाश्रयं पदमृक्षाणाम् ॥१।१।३०॥ स्वस्थे दारा· ॥१।१।३१॥ सुतस्थे जन्म ॥१।१।३२॥**

ऋक्षाणा राशीना यावदीशाश्रय पद स्यात्। विचार्यो यो राशिस्तस्माद् गतक्रमेण यावत्सख्ये राशौ विचार्यराशिस्वामी स्यात्ततोऽग्रे गतक्रमणैव तावत्सख्यो राशिस्तस्य विचार्यराशे पद भवेदित्यर्थ । ननु विचारविषयीभूतराशे सकाशात्तत्स्वामी गणनया·

यावत्संख्ये राशावुपलभ्यते तस्मादग्रे तावत्संख्य एव राशिस्तस्य विचारविषयीभूत-राशेः पदमित्यर्थः । कस्माज्ज्ञायते । समासादिति व्याख्यातारः । समासस्त्वेवम्—यद् राशितदीशमध्यगतं भमण्डलीयद्वादशभागपरिगणितं परिमाणमस्येति यावान् । 'यत्तदेभ्यः परिमाणे वतुप्' । यावांश्चासावीशश्च यावदीश इति कर्मधारयः । ततः यावदीश आश्रयोऽवस्था यस्य पदस्य तद् यावदीशाश्रयम्, इति तद्गुणसंविज्ञानो बहुव्रीहिः । तथा च वृद्धः—'लग्नाद्यावतिथे तिष्ठेद्राशौ लग्नेश्वरः क्रमात् । ततस्ताव-तिथं राशिं लग्नारूढं प्रचक्षते ॥' इति । वतोरिथुक् । अत्र स्वामी-ऋक्षाणां पद-मित्युक्त्या महाणामपि तत्तद्राशिद्वारकं पदं सूच्यते । ग्रहाद् यावद्दूरे ग्रहस्वामिको राशिस्तत्स्वामिकराशेस्तावद्दूरराशिर्ग्रहपदमिति वेदितव्यम् । तत्र रविचन्द्रयोरेकैकराशि-रेव पदम् । भौमादीनां भौमादिस्वामिकं राशिद्वयं मेषवृश्चिकात्मकमिति पदद्वयं वेदि-तव्यम् । अत्रापि विषमसमाधिकाराद् गणना प्राची प्रतीची चेति क्रमेणान्वेति । परंतु पदानयने सर्वत्रापि क्रमोत्क्रमकृतवैषम्याभावान्नातीवाग्रहः कार्य इति ॥ स्वस्थे, स्वस्मिन् (=४) तिष्ठतीति । लग्नाच्चतुर्थे लग्ननाथे सति दाराः (=$\frac{२}{४}$=) चतुर्थगतो राशिर्लग्नस्य पदं स्यात् ॥ सुतस्थे, सुते (=$\frac{६७}{४}$=७) तिष्ठतीति । लग्नात्सप्तमस्थे लग्न-नाथे सति जन्म ($\frac{८५}{६}$=१०) दशमगतो राशिर्लग्नस्य पदं स्यात् । अस्य नीलकण्ठवृत्तौ दारशब्देन सप्तमराशिर्जन्मशब्देन जन्मराशिरिति व्याख्यानम् 'सर्वत्र सवर्णभाग्दाशयश्च ॥ १।१।३३ ॥ इति सूत्रविरुद्धत्वादुपेक्ष्यम् ।

अथ लग्नारूढानयनम्—अभिमतराशौ इत्यादिना गतगणनया मिथुनलग्नस्वामी बुधो वृश्चिकगतः पञ्चमो भवत्यतस्तथा गणनया पञ्चमो मेषो लग्नस्य पदम् एवं परेषाम् ॥

अथ वक्ष्यमाणग्रन्थोपयुक्तानि होराभावघटीतनूंषि संस्कारविशेषं चोपजातित्रये-णाह—

जन्मेष्टकालो नयनामृतांशुभि-(१२)
स्तर्कै (६) र्नभोवह्निभि(३०) राहतः क्रमात् ।
फलैर्लवाद्यैश्च युतोऽयमा भवे-
द्धोरातनुर्भावतनुर्घटीतनुः ॥ ३१ ॥
तद्धौरिकं भाविकमार्क्षिकं फलं
क्षिपेत्स्वरांशौ विषमा तनूर्यदि ।
समा भवेच्चेत्फलमत्र योजये-
दित्यूचिरे केचन दीर्घदर्शिनः ॥ ३२ ॥
तनूः समा वा विषमा प्रजायतां
तस्यां विदध्यात्फलयोजनं सदा ।
इति प्रकारान्तरमादिशन्परे
फलप्रणालीं रचनाविचक्षणाः ॥ ३३ ॥

जन्मेत्यादि—होरालग्नादिसाधनेऽनुपात । यदि सार्धेन घटीद्वयेन त्रिंशदंशास्तदेष्ट घटीभि किम् $\frac{५}{२}$ ३० इघ = $\frac{२\times३० इ घ}{५}$ = $\frac{१२ इ घ}{}$ =फलमंशादि ।

अथवा, $\frac{३० इ प}{१५०}$ = $\frac{इ प}{५}$ =फ ।

यदि घटीपञ्चकेन त्रिंशदंशास्तदेष्टघटीभि किम् ,

५ ३० इ घ = $\frac{३० इ घ}{५}$ = ६ इष्ट घ =फ ।

अथवा $\frac{३० इ प}{३००}$ = $\frac{इ प}{१०}$ =फ ।

यदि घट्या त्रिंशदंशास्तदेष्टघटीभि किम्,

१ ३० इ घ = $\frac{३० इ घ}{१}$ =३० इ घ =फ ।

अथवा $\frac{३० इ प}{६०}$ = $\frac{इ प}{२}$ =फ ।

एतेन 'जन्मेष्टकालो नयनामृतांशुभिस्त्र्यर्कैनभोवह्निभिराहत क्रमात्' इत्युपपद्यते । सूर्योदये खलु जन्मभावहोराघटीलग्नानि तुल्यानि भवन्ति, तदनु निजनिजोदयमानेन भिन्ना युग्न्ति । यस्माल्लग्नाना सूर्योदयात्प्रभृतिस्तस्मात्सूर्योद्गणना व्याख्या । एतेन 'फलैर्नवांशैश्च युतोऽयमा भवेद् होरातनुर्भावतनुर्घटीतनु ' इत्यप्युपपद्यते । 'तद्धोरिक' —, इति पद्येन वृद्धाना मत प्रतिपाद्यते । तथा च वृद्धवाक्यानि—'सूर्योदयात्समारभ्य घटीपञ्चप्रमाणत । जन्मेष्टकालपर्यन्त गणनीय प्रयत्नत ॥ ओजराशौ यदा लग्न सूर्यराश्यनुसारत । समलग्न जन्मलग्नात्सख्या प्राप्यते द्विज ॥ भावलग्न विजानीयाद् होरालग्न तदुच्यते । तथा सार्धद्विघटिकामितास्त्लाद्विलग्नभात् ॥ प्रयाति लग्न तन्नाम होरालग्न द्विजोत्तम । यज्जन्म विषमर्क्षेषु सूर्योदिगणयेत्क्रमात् ॥ समलग्न यदा जन्म गणयेन्न्मभाद् द्विज ॥' इति 'लग्नादेकघटीमात्र याति लग्न दिने दिने । परं तु घटिकालग्न निर्दिशेत्कालवित्तम ॥ इति च बहुटीकानुसारी कारिकासमह । 'तनू समा वा-' इत्यनेन नीलकण्ठादयो वर्ण्यते ॥

अथ होरालग्नानयनम्—जन्मेष्टकालो घट्यादि ३०।५९ अथ द्वादशगुणो जात लवादि ३७१।४८ लवेषु त्रिंशता भक्तेषु जात राश्यादि० ।११।४८ । इद तात्कालिकार्के ७।२९।५१।२४ युक्त जात राश्यादि होरालग्नम् ८।११।३९।२४ ॥

अथ भावलग्नानयनम्—जन्मेष्टकाल ३०।५९ अथ षड्गुणितो जात लवादि १८५।५४ । लवेषु त्रिंशता भक्तेषु जात राश्यादि ६।५।५४ । इदमर्के ७।२९।५१।२४ युक्त जात राश्यादिभावलग्नम् ३।५।४५।२४ ॥

अथ घटीलग्नानयनम्—जन्मेष्टकालः ३०।५९। अयं त्रिंशता गुणितो जातं लवादि ९२९।३०। लवेषु त्रिंशता भक्तेषु जातं राश्यादि ६।२९।३० इदमर्के ७।२९। ५१।२४ युक्तं जातं राश्यादिघटीलग्नम् २।२९।२१।२४ ॥ ३१-३३ ॥

अथ वक्ष्यमाणग्रन्थोपयुक्तं गुलिकादिसाधनमुपजातित्रयेणाह—

दिवानिशोरष्टमभागसंमितः
खण्डः स रव्यादिदिनक्रमाद्दिवा ।
ससाङ्कपञ्चाब्ध्यनलद्विभूमितः
शनैश्चरांशो ७।६।५।४।३।२।१ गुलिकः प्रकीर्त्यते ॥ ३४ ॥

नक्तं तु वारेश्वरपञ्चमादित—
स्त्रिद्वीन्दुशैलाङ्गशराब्धिसंख्यकः ३।२।१।७।६।५।४।
हृता स्वखण्डेन दिनस्य वा निशो
मितिर्गजाप्ता गुलिकेष्टकालकः ॥ ३५ ॥

दिने स सूर्योदयतः प्रजायते
रात्रौ द्युमानेन समन्वितस्तथा ।
ततः स्वदेशानुसृतोदयैस्तनुः
साध्या स मान्दिर्गुलिकोऽपि कथ्यते ॥ ३६ ॥

दिवानिशोरित्यादि—दिनस्याष्टमांशमितः कालखण्डो रव्यादिक्रमेण दिने सप्तमादिसंख्यो गुलिक इत्युच्यते । तत्राष्टमः खण्डो निरीशः । एतदुक्तं भवति—दिवा रवौ दिनमानाष्टमांशमितः सप्तमः खण्डः, सोमे षष्ठः, भौमे पञ्चमः, बुधे चतुर्थः, गुरौ तृतीयः, शुक्रे द्वितीयः, शनौ प्रथमः खण्डो गुलिकः । प्रतिवारमष्टमो निरीशः । रात्रावप्यष्टमांशमितः कालखण्डो रव्यादिवारेशपञ्चमादिक्रमेण तृतीयादिसंख्यो गुलिकः । एतदुक्तं भवति—नक्तं रवौ रात्रिमानाष्टमांशमितस्तृतीयः खण्डः, सोमे द्वितीयः, भौमे प्रथमः, बुधे सप्तमः, गुरौ षष्ठः, शुक्रे पञ्चमः, शनौ चतुर्थः खण्डो गुलिक इति । सैषा गुलिकस्थितिः सुखार्थं पाठपठिता ।

अथ गुलिकेष्टकालः—यदष्टभिः खण्डैर्दिनस्य रात्रेर्वा मानं लभ्यते तदा सप्तमादिखण्डेन तृतीयादिखण्डेन वा किं फलं गुलिकेष्टकालः । स च दिने सूर्योदयादागच्छति । रात्रौ दिनमानेन युक्तः सूर्योदयाद्भवति । यथेष्टकालतात्कालिकार्काभ्यां स्वदेशोदयैर्लग्नं साध्यते तथैव गुलिकेष्टकालतात्कालिकार्काभ्यां स्वदेशोदयैर्लग्नं साध्यतां तच्च गुलिकेष्टलग्नं स्यात् । अत्र वृद्धवाक्यानि—'रविवारादिशन्यन्तं गुलिकादि निरूप्यते । दिवसमष्टधा भंक्त्वा वारेशाद् गणयेत्क्रमात् ॥ अष्टमांशो निरीशः स्याच्छन्यंशो गुलिकः स्मृतः । रात्रिमप्यष्टधा भंक्त्वा वारेशात्पञ्चमादितः ॥ गणयेदष्टमः खण्डो निष्पतिः परीकीर्तितः । शन्यंशो गुलिकः प्रोक्त इति ।

अथ गुलिकेष्टकालानयनम्—रात्राविष्टकालत्वाद् रात्रिमानम् ३४।९ स्वखण्डाङ्केन ५ गुणितम् १७०।४५ अष्टभिर्भक्तम् २१।२०।३८। इदं दिनमानेन २५।५१ युक्तं जातं सूर्योदयाद् गुलिकेष्टकालो घट्यादिकः ४७।११।३८। अतो गुलिकलग्नानयनम्—गुलिकेष्टकालिकोऽर्कः ८।०।७।५८ अयनांशैः २२।३०।४० सहितः ८।२२।३८।३८। अस्य भोग्यांशाः ७।२१।२२। धनुरुदयः ३४३ गुणितः २५२३।८।४६ त्रिंशता ३० भक्तो जातो भोग्यकालः ८४।६।१७।३२। अमुं गुलिकेष्टकालस्य पलेभ्यः २८३१।३८। सशोध्य पुनर्धनुषोऽग्रे मकरादिकन्यान्तानां नवराशीनामुदयपलानि ३०३+२५०+२१७+२१७+२५०+३०३+३४३+३४८+३३९=२५७० एकीकृतानि संशोध्य शेषम् १७७।३१।४२।२८ अस्मात्तुलोदयो न शुध्यतीत्यतः इदं त्रिंशता गुणितं ५३२५।५१।१४ तुलोदयेन ३३९ भक्तं लब्धमंशादि १५।४२।३८ इदमशुद्धपूर्वैर्मेषादिषड्राशिभिः सहितम् ६।१५।४२।३८ अयनांशैः रहितं जातो राश्यादि गुलिकः ५।२३।११।५८ ॥२४—२६ ॥

अथ पद्यामृतशिष्टासूत्रत्रयी—

**सर्वत्र सवर्णा भावा राशयश्च ॥१।१।२३॥ न ग्रहाः ॥१।१।२४॥ होराद्यः सिद्धाः ॥१।१।२५ ॥**

अत्र शास्त्रे सर्वत्र भावा राशयश्च सवर्णाः एकादिसङ्ख्यावबोधकशब्दगम्याः। अत एव 'स्वस्थे दाराः' इत्यादौ स्वदार-शब्दाभ्यां द्वितीय-सप्तमभावौ न गृह्येते, किन्तु तत्तच्छब्दलभ्यचतुर्थभाव एव गृह्यते इति सुधीभिराकलनीयम्। दारभाग्येति सूत्रे दारशब्देन चतुर्थो भावः सर्वैर्गृहीतोऽपि। अत्र स्थिरत्वाभिप्रायेण भचक्रीया लग्नादिद्वादशपदार्थाः भावपदवाच्याः, भावेषु सञ्चरमाणा मेषादिद्वादशपदार्थाः द्युभराशियोगतया राशिपदवाच्येति सूक्ष्मदृशा विभावनीयम्। इह वर्णेन वर्णद आक्षिप्यत इति बहवः। तथा च वृद्धवाक्यानि—

'ओजलग्नप्रसूतानां मेषादेर्गणयेत्क्रमात्।
युग्मलग्नप्रसूतानां मीनादेरपसव्यतः॥
मेषमीनादितो जन्मलग्नान्तं गणयेत्सुधीः।
तथैव होरालग्नान्तं गणयित्वा ततः परम्॥
पुंस्त्वेन स्त्रीतया चेत्ते सजातीये उभे यदि।
तर्हि संख्ये योजयीत वैजात्ये तु विशोधयेत्॥
मेषमीनादितः पश्चाद् यो राशिः स तु वर्णदः।' इति।
'पापदृष्टिः पापयोगो वर्णदस्य त्रिकोणके।
यदि स्यात्तर्हि तद्राशिपर्यन्तं तस्य जीवनम्॥
रुद्रशूले यथैवायुर्मरणादि निरूप्यते।
तथैव वर्णदस्यापि त्रिकोणे पापसङ्गमे॥

वर्णदात्सप्तमाद्राशेः कलत्रादि विचिन्तयेत्।
एकादशाद्ग्रजं तु तृतीयात्तु यवीयसम्॥
पञ्चमे तनुजं विद्यान्मातरं तुर्यपञ्चमे।
पितुस्तु नवमान्मातुर्वर्णदात्पञ्चमस्य तु॥
शूलराशिदशायां वै प्रबलायामरिष्टकम्॥' इति च।

अत्रेयं गणितप्रक्रिया—जन्मलग्नं होरालग्नं चेदुभयं विषमं, तदा तयोर्योगः कार्यः, स चेद् विषमस्तर्हि स एव वर्णदराशिः स्यात्। यदि चोभयं समं, तदा द्वादशराशिभ्यो विशोध्य शेषयोर्योगः कार्यः, स चेद् विषमस्तर्हि स एव वर्णदः स्यात्। यदि जन्मलग्नहोरालग्नयोर्मध्ये एकं विषमं, परं समं तदा समं द्वादशराशितो विशोध्य तयोरन्तरं कार्यम्, तच्चेद्विषमं तर्हि स एव वर्णदः स्यात्। यदि चात्र योगोऽन्तरं वा समस्तदा द्वादशराशिनिपातेन वर्णद इति वर्णदकथा। वर्णदकथासारस्तयम्—

'जन्महोरातनूयोगो विषमो वर्णदो भवेत्।
समस्तु चक्रतः शुद्धो वर्णदो वर्ण्यते बुधैः॥

जन्मलग्नम् २।२७।४५।२७ होरालग्नम् ८।११।२६।२४ अनयोर्योगः ११।९।२४। ५१ समत्वात् द्वादशशुद्धो जातो वर्णदः ०।२०।३५।९ अत्र योगो द्वादशाधिकश्चेद् द्वादशभिस्तष्टः।

अथ वर्णददशा—

'होरालग्नभयोर्नेंयाऽदुर्बलाद् वर्णदा दशा।
यत्संख्यो वर्णदो लग्नात्तत्संख्याक्रमेण तु।
क्रमव्युत्क्रमभेदेन दशा स्यात्पुरुषस्त्रियोः॥'

'लग्नाद् यत्संख्याको वर्णदराशिस्तत्संख्याकमत ओजयुग्मलग्नानुरोधेन प्रथमप्राप्तक्रमव्युत्क्रममर्यादया तत्तद्राशीनां दशा स्यात्, इति नीलकण्ठः। अत्र खलु जन्मलग्नस्य मिथुनस्य होरालग्नस्य धनुषश्च मध्ये धनुर्बल्यान् तेन होरालग्नमारभ्य वर्णदपर्यन्तं गणनया पञ्चसंख्या लभ्यते सा विषमेति हेतोर्धनुषः सकाशात् क्रमगणनया धनुर्मकरकुम्भमीनमेषप्रभृतीनां दशा विदेदयाः। दशान्दास्तु चरदशोक्ता एव ग्राह्याः। नीलकण्ठस्तु एतद्वर्णदानयनवद् भावलग्नमेव जन्मलग्नं मत्वा भाववर्णदमानीतवान्, तत्र मूलं मृग्यम्।

न ग्रहाः। अत्र भावा इवाथवा राशय इव ग्रहाः खेटाः सवर्णा वर्णगम्या न भवेयुः। वर्णदवादिनां मते ग्रहाणां वर्णदा न भवन्तीति योजनीयम् ॥

होरादयः सिद्धा इति। राशिहोरादेष्काणनवांशद्वादशांशत्रिंशांशा इति गर्गादिशास्त्रतः स्पष्टम् ॥

अथ प्रहर्षिण्या प्रथमपादपदार्थानुपसंहरति—

इत्युक्तः खलु रसराम (३६) संख्यपद्यैः
शास्त्रार्थो मुनिवचनानुरुद्ध एव।
तेनाद्य प्रशमितसंशयावतारं
छात्राणां मतिकलिका प्रहर्षिणी स्यात् ॥ ३७ ॥

इति श्रीदुर्गाप्रसादद्विवेदरचिते जैमिनिपद्यामृते शास्त्रावतरणं नाम प्रथमः प्रवाहः
श्री ६ गुरुचरणार्पणमस्तु ॥

इत्युक्त इति—मुनिवचनानुरुद्ध एव। आवश्यके वृद्धवचनग्रहणमपि। अथवा 'मुनिजरठानुरुद्ध एव' इति पठनीयम् ॥ ३७ ॥

इति श्रीजैमिनिपद्यामृतवृत्तौ मूलकन्दल्यां प्रथमः प्रवाहः ॥

---

अथ द्वितीयप्रवाहो विविच्यते। तत्र पूर्वं मुनीन्द्रस्मरणपूर्वकं फलनिरूपणं रथोद्धतया प्रतिजानीते—

जातकागममहोपदेशकं जैमिनिं मुनिविकर्तनं स्तुवन्।
कारकांशमवलम्ब्य कीर्तये कुण्डलीफलमपास्तसंभ्रमम् ॥ १ ॥

जातकेति—जातकागमो होराशास्त्रं तस्य महोपदेशकं महागुरुम्। महत्त्वं च असाधारणशास्त्रप्रकाशकत्वेन। मुनिर्विकर्तन इव मुनिविकर्तनः। उपमितसमासः। विकर्तनः सूर्यः। तं मुनिविकर्तनं जैमिनिं स्तुवन् कारकांशमात्मकारकग्रहस्य नवमांशमालम्ब्य आश्रित्य। सामान्यवचनोऽप्यंशशब्दो जातकशास्त्रे नवमांशे रूढः। अपास्तो निरस्तः संभ्रमो भ्रान्तिर्यस्मिन्कर्मणि तद्यथा स्यात्तथा कुण्डलीफलं कीर्तये कथयामि। राशीनां सन्निवेशस्य कुण्डलाकारतया कुण्डलीव्यवहारः। तथैव चक्रम्; 'चक्रे वामदृगुच्यते बलवती' इत्यादिप्रयोगात्। एवं मण्डलादिशब्दाः पर्यायतया पक्षान्न व्यवह्रियन्ते। अनभिधानात् ॥ १ ॥

## अथ स्वांशो ग्रहाणाम् १।२।१ ॥

अथ उपदेशानन्तरमिति ऋजवः । वस्तुतस्तु अथशब्दोऽधिकारार्थः । तथा च ग्रहाणां स्वांश आत्मकारकाधितनवांशोऽधिकृतो वेदितव्यः । ततः फलं वाच्यमिति तात्पर्यम् ॥

यथा प्राच्यां लग्नः प्रान्तिस्तृतीयः प्रदेशो लग्नमिति क्रमेण द्वादशराशयस्तथा कुण्डल्यामपि प्राचीमनुरुध्यैव लग्नादय इति सिद्धिरभिन्नतः स्पष्टम् । अत एव प्रधानव्यपदेशान्यायेन लग्नादिप्राधान्यादेव लग्नभावांशकादि कुण्डलीशब्दव्यपदेशः सोपपत्तिकः । अत्र बहुभिर्नवांशकुण्डल्यां लग्नभावादिषु ग्रहा न पात्यन्ते ॥

अथ कारकांशकुण्डली ।



## अथवा स्वांशकुण्डली ।




अथ कारकाश्रितमेषवृषमिथुननवांशफलान्याह—

मूषिकास्तदरयो भयप्रदा आत्मकारकलवे क्रियं गते ।
सौख्यदाश्च पशवो वृषाश्रिते स्थौल्यकण्डुधिगमे नृयुग्मगे ॥ २ ॥

मूषिका इति—आत्मकारकलवे कारकीभूतग्रहनवांशे क्रिय मेष गते याते सति, मूषिका, तेषामरयो मार्जारा भयप्रदा भवन्ति । अर्थात्फलस्वामिनो देवदत्तस्य मूषिकमार्जारकृता पीडा जायते । तथा कारकांशे वृषाश्रिते सति, पशव सौख्यदा भवन्ति । तथा कारकांशे नृयुग्मगे मिथुनाश्रिते सति, स्थौल्य शरीरस्थूलता, कण्डू खर्जू, तयोरधिगम प्राप्तिर्भवति ॥ २ ॥

पश्चमूषिकमार्जाराः १।२।२ ॥ तत्र चतुष्पादः १।२।३ ॥ मृत्यौ कण्डूः स्थौल्यं च ।१।२।४ ॥

पश (=$\frac{५}{१}\frac{३}{२}$=१) मेष कारकांशश्चेन्मूषिकमार्जारा दु खदायिन स्यु । मूषिकै सहिता मार्जारा इति विग्रह । अन्यथा मूषिकमार्जारमिति स्यात् । वस्तुतस्तु नास्माकमिव ऋषीणामनुशासनपारतन्त्र्यम् । अत एव मीमांसातन्त्रवार्तिके भट्टपादा —
'कल्पसूत्रस्मृतिग्रन्थमीमांसागृह्यकारिण । शिष्टा दृष्टा प्रयुञ्जाना अपशब्दाननेकश ॥'

इति । तत्र (=$\frac{२}{१}\frac{६}{२}$=२) वृषः कारकांशश्चेच्चतुष्पादः; प्रथमाबहुवचनम् । दुःखदायिनः । मृत्यौ (=$\frac{१}{१}\frac{५}{२}$=३) मिथुने कारकांशे सति, कण्डूः स्थौल्यं च स्याताम् ॥

अथ कारकाश्रितकर्कसिंहकन्यानवांशफलान्याह—

कुष्ठरुग्जलभियौ कुलीरगे श्वापदा हि भयदा मृगेन्द्रगे ।
स्थौल्यकण्डुधिगमस्तनूनपाद्भीतिरेणनयनावलम्बिनि ॥ ३ ॥

कुष्ठेति—कारकांशे कुलीरगे, कुष्ठरुग् कुष्मालक्ष्मं कुष्ठः स एव रुक् कुष्ठरुग्, श्वेतकुष्ठात्म आमयः । जलभीः, ते स्याताम् । मृगेन्द्रगे सिंहगे, श्वापदाः शुन इव पदं येषां ते । हिंस्रपशव इति हेमचन्द्रः । भयदा भीतिजनकाः । एणनयना कन्या, तदवलम्बिनि तद्गते कारकांशे, स्थौल्यकण्डुधिगमः । व्याख्यातं प्राक् । तनूनपाद् अग्निस्तस्माद् भीतिः स्यात् । अग्निजैः कण्डुःखमिति वा पाठः ॥ ३ ॥

दूरे जलकुष्ठादिः १।२।२५ ॥ शेषाः श्वापदानि १।२।२६ ॥ मृत्युवज्जायाग्निकणश्च १।२।२७ ॥

दूरे (=$\frac{२}{१}\frac{८}{२}$=४) कर्के कारकांशे, जलभयं कुष्ठः, आदिशब्देन तत्सजातीयामयश्च । शेषाः (=$\frac{५}{१}\frac{५}{२}$=५) सिंहः कारकांशश्चेद् श्वापदानि भयदानि । जाया (=$\frac{२}{१}\frac{८}{२}$=६) कन्या कारकांशश्चेत् मृत्युवन्मिथुनकारकांशवत्फलम्; तथा अग्निकणो वह्निस्फुलिङ्गो दुःखकृत् ॥

अथ कारकाश्रिततुलावृश्चिकनवांशफलान्याह—

पण्यकर्मनिरतस्तुलाधरे स्वांशके भवति वृश्चिके पुनः ।
अम्बुसंभवभुजङ्गमव्यथा मातृदुग्धविलयश्च जायते ॥ ४ ॥

पण्येति—अम्बुनि संभवो येषां तथाभूता ये भुजङ्गमाः सर्पास्तद्व्यथा, मातुर्दुग्धस्य विलयो हानिश्च जायते ॥ ४ ॥

लाभे वाणिज्यम् १।२।२८ ॥ अत्र जलसरीसृपाः स्तन्यहानिश्च १।२।२९ ॥

लाभे (=$\frac{४}{१}\frac{३}{१}$=७) तुलाकारकांशे वणिजां पण्याजीवानां कर्म वाणिज्यम् । अत्र (=$\frac{२}{१}\frac{०}{२}$=८) वृश्चिके कारकांशे जलसरीसृपा जलव्याला भयप्रदाः, तथा स्तन्यस्य मातृदुग्धस्य हानिः ॥

अथ कारकाश्रितधनुर्मकरनवांशफलान्याह—

पात उच्चविषयाच्च वाहनादिष्यते क्रमतया धनुर्धरे ।
ग्रन्थिकण्डुखगवारिचारितः स्वांशके मकरगे ग भीर्भवेत् ॥ ५ ॥

पात इति—धनुर्धरकारकांशे, वाहनाद् गजादेः, उच्चविषयात् प्रासादसोपानादिप्रदेशात्, क्रमतया अवलम्बनासादनपूर्विकया पातः पतनमिष्यते । ग्रन्थिः शरीरे विविधाकारा मांसग्रन्थिः, कण्डुः खर्जुः; तद्वान्योऽपि । खगा आकाशगामिनः, वारिचारिणो जलचराः तेभ्यः । शेषं स्पष्टम् ॥ ५ ॥

**समे वाहनादुच्चाच्च क्रमात्पतनम् १।२।१० ॥ चलचरखेचरखेटकण्डू-दुष्टग्रन्थयश्च रिष्फे १।२।११ ॥**

समे (=$\frac{५}{६}\frac{६}{२}$=९) धनुषि कारकांशे, चलचरा गोधानक्रमकरादयो जलजन्तुविशेषाः, खेचराः पक्षिणः, खेटा यक्षराक्षसविनायकग्रहरूपाः, एषामावेशेन मनुष्याणां पीडोत्पद्यते। तत एव सारावल्यादौ आधिदैविकदुःखे परिगणिताः। पद्यामृते खगशब्देनैतत्परिगृहीतं भवति। कण्डूदुष्टग्रन्थिपदार्थौ व्याख्यातौ। अथवा दुष्टग्रन्थिशब्देन महाज्वरपूर्वक आमयविशेषो गृह्यते, येन ग्रस्तः प्रायो म्रियत एव ॥

अथ कारकाश्रितकुम्भमीननवांशफलान्याह—

> कुम्भगामिनि तडागदीर्घिकाकूपखाननविधाधुरंधरः।
> धर्मकर्मकलनापरायणो मोक्षभाग्भवति मीनगेऽशके ॥ ६ ॥

कुम्भेति—दीर्घिका वापी। शेषं स्पष्टम् ॥ ६ ॥

**तडागादयो धर्मे १।२।१२ ॥ उच्चे धर्मनित्यता कैवल्यं च १।२।१३ ॥**

धर्मे (=$\frac{५}{१}\frac{२}{२}$=११) कुम्भस्थिते कारकांशे। शेषं पद्यतः स्पष्टम्। उच्चे (=$\frac{६}{१}\frac{०}{२}$=१२) मीनस्थिते कारकांशे। एवं पद्यादि द्वादशसूत्र्या कारकाश्रितद्वादशराशीनां नवांश-फलानि प्रतिपादितानि। मूषिकमार्जारा दुःखदाः, चतुष्पादः सुखदा इति व्याख्याने वृद्धवाक्यमेव बीजमिति कुमत। वस्तुतस्तूभयनौचित्यमेव नियामकम् ॥

अथ कारकांशकुण्डल्यां ग्रहस्थित्यादिना द्वितीयप्रवाहान्तं यावत्फलानि वक्तव्यानि, तत्र पूर्वमष्टानिंशता स्वागताभिः फलान्याह—

> स्वांशके कमलबान्धवयुक्ते राजकार्यनिरतं कथयन्ति।
> पूर्णचन्द्रभृगुसंमिति विद्या जीविनं विविधभोगपरं च ॥ ७ ॥
> स्वांशके कुजयुतेऽनलजीवी कौन्तिको विविधधातुविधिज्ञः।
> वाग्विभासिनि वणिग्व्यवहारी शिल्पविद् गुणविनिर्मितिकारी॥८॥
> आत्मकारकलवे सुरपूज्ये ज्ञानकर्मनिरतः श्रुतिविच्च।
> भार्गवे तु पुरुपाद्युपजीवी कामुको नृपतिशिष्टिनिविष्टः ॥ ९ ॥
> स्वांशके सवितृसूनुसनाथे सुप्रसिद्धकृतिजीवनकारी।
> स्यात्तमे विषहरायसयन्त्री वा धनुर्धरमलिम्लुच एव ॥ १० ॥
> आत्मकारकलवे शिखियुक्ते तस्करश्च करटिव्यवहारी।
> सैंहिकेयनलिनीपतिनिष्ठे सर्पदंशनकृतं मरणं स्यात् ॥ ११ ॥

स्वांशक इत्यादि—स्वांशके कारकांशे। कमलबान्धवः सूर्यः। कौन्तिकः, कुन्तः प्रहरणमस्य। ठक्। गुणविनिर्मितिकारी तन्तुवाय इत्यर्थः ॥ ज्ञानकर्मणी उपनिष-त्कल्पसूत्रप्रतिपाद्ये, तत्र निरतः। श्रुतयो मन्त्रब्राह्मणरूपाः, ता वेत्तीति। नृपते शिष्टिराज्ञा, तत्र निविष्टः ॥ आयसयन्त्राणि वस्तुसाधनभूतानि नानाविधानि। मलि-म्लुचः चौरः ॥ शिखी शिखेव तद्गुणयोगात्। यथा किल शिखा दीर्घविसारिणी

चाकचक्यचमत्कारिणीति । सास्येति शिखी केतुः । यद्यपीह गणितेन य आनीयते तस्यैवमाकारो न संभवति, तथाप्यागमबलेन तथा व्यवह्रियते । अत एव ध्वजशब्दोऽपि तत्पर्यायतया प्रयुज्यते महर्षिभिः । करटी गजः । सिंहिकाया अपत्यं सैंहिकेयो राहुः । नलाः सन्त्यस्यामिति नलिनी पद्मिनी, तत्पतिः सूर्यः ॥ ७—११ ॥

**तत्र रवौ राजकार्यपरः ।१।२।१४॥ पूर्णेन्दुशुक्रयोर्भोगी विद्याजीवी च ।१।२।१५॥ धातुवादी कौन्तायुधो वह्निजीवी च भौमे ।१।२।१६॥ वणिजस्तन्तुवायाः शिल्पिनो व्यवहारविदश्च सौम्ये ।१।२।१७॥ कर्मज्ञाननिष्ठा वेदविदश्च जीवे ।१।२।१८॥ राजकीयाः कामिनः शतेन्द्रियाश्च शुक्रे ।१।२।१९॥ प्रसिद्धकर्मा जीवः शनौ ।१।२।२०॥ धानुष्काश्चौराश्च जाङ्गलिकलोहयन्त्रिणश्च राहौ ।१।२।२१॥ गजव्यवहारिणश्चौराश्च केतौ ।१।२।२२॥**

'तत्र' इति सप्तमी स्वांशाधिकरणकफलबोधिका; न तु संख्योत्थापिका । कुन्त एव कौन्तः, स्वार्थिकोऽण्; स आयुधमस्य । वह्निजीवी वह्निना जीवनकर्ता । वणिज इत्यादि बहुवचनमविवक्षितम् । 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इत्यापस्तम्बसूत्रेण संहिताब्राह्मणग्रन्थसमुदायो वेदः । शतं शतवर्षाणि इन्द्रियाणि येषां ते शतेन्द्रियाः । 'शतायुर्वै पुरुषः' इति 'पश्येम शरदः शतम्' इत्यादिश्रवणाच्च । पुरुषायुषजीविन इति निर्गलितार्थः । 'अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः । कृतत्रेतादिषु ह्येषामायुर्ह्रसति पादशः' इति मनुवचनादौ तु शतशब्दो बहुलपर इति प्रामाणिकाः । अत एव मीमांसकनयेन यथेष्टं संवत्सरशब्दस्य दिनपरतापि न न्याय्या । तदेतत्प्राचीनकक्ष्यभङ्गभिया मीमांसकमतसमर्थनपुरस्सरं समासेनोक्तमस्माभिः पद्यामृततरङ्गे—'श्रुतौ शतायुः पुरुषः प्रदिष्टो बहुलयोगी शतशब्दशक्यः । रामादिकानामधिकायुराप्तौ युक्तं प्रतीमः फलितेऽमितायुः' ॥ इति मन्वादिवचनप्रमाणीकरणपूर्वकम्—'स षाण्मासिको वासरिको भचक्रभोगो भवेद् भास्करसंश्रयेण । तत्रापरं ब्राह्मणगौरवेण स स्वीचकारेति विरोधभङ्गः' ॥ इति मीमांसकमतं व्यवस्थापितमित्यन्यत्र विस्तरः । जाङ्गुलीं विषविद्यामधीयते विदुर्वा जाङ्गुलिकाः । शेषं स्पष्टं पद्यामृतेन व्याख्यातं च । तत्र रवौ–, इत्यादिनवसूत्र्या कारकांशे रव्यादिग्रहावस्थानेन यथाक्रमं फलानि निर्दिशति ।

स्वांशके रविविधुंतुदयुक्ते सौम्यदृष्टियुजि तूक्तफलं न ।
सूर्यराहुयुतकारकभागे सौम्यमात्रयुजि जाङ्गुलिकः स्यात् ॥१२॥
स्वांशकेऽर्कतमसंगिनि दृष्टे केवलेन धरणीतनयेन ।
जायते खलु निकेतनदाही वा निकेतनविभावसुदायी ॥ १३ ॥
स्वांशके सवितृराहुसमेते जायते न दहनं कविदृष्टे ।
आदितेयगुरुणा च सुदृष्टे संनिकृष्टसदनावधिदाहः ॥ १४ ॥

स्वांशक इत्यादि—विधुं तुदति व्यथयतीति विधुंतुदो राहुः। खच्, मुम्। सौम्य-दृष्ट्या शुभग्रहावलोकनेन युज्यत इति। क्विप्॥ ताम्यतीति तमो राहुः। पचाद्यच्। निकेतनं गृहम्। विभावसुरग्निः। सन्निकृष्टसदनावधिदाहः स्वगृहदाहप्रसङ्गेन प्रतिवेशिनामपि गृहदाहः स्यात्॥ १२—१४॥

**रविराहुभ्यां सर्पनिधनम्॥१।२।२३॥ शुभदृष्टे तन्निवृत्तिः॥१।२।२४॥ शुभमात्रसंबन्धाज्जाङ्गुलिकः॥१।२।२५॥ कुजमात्रदृष्टे गृहदाहकोऽग्निदो वा॥१।२।२६॥ शुक्रदृष्टे न दाहः॥१।२।२७॥ गुरुदृष्टे त्वासमीपगृहात्॥१।२।२८॥**

'तत्र' इत्यनुवर्तत एव। प्रक्रान्ततया रविराहुभ्यां युत इत्येवार्थः। तथैव प्रमाणवाक्येऽपि। 'आसमीप-' इत्यत्राभिविधावाङ्। शेषं पद्यतः स्पष्टम्॥ अत्र वाक्यानि—'कारकांशे भानुतमौ शुभषड्वर्गसंयुतौ। विषवैद्यो भवेन्नून विपहर्ता विचक्षण॥ भौमेक्षिते कारकांशे भानुस्वर्भानुसंयुते। अन्यग्रहा न पश्यन्ति स्ववेश्म परदाहकः॥ यदि सौम्येक्षिते स्वांशे ह्यग्निदो नैव जायते। पार्श्वे तु गुरोर्दृष्टे समीपगृहदाहकः॥' इति।

स्वांशके सगुलिके विषदाता वा स्वयं विनिहतो गरलेन।
शीतदीधितिविलोचनसत्त्वे तस्करस्तदपनीतधनो वा॥ १५॥
स्वांशके सगुलिके बुधमात्रालोकिते किल बृहद्वृषणः स्यात्।
स्वांशके ध्वजयुते खरदृष्टे कर्णकृन्तनममुत्र रुजा वा॥ १६॥
आत्मकारकलवे शिखिनाढ्ये दीक्षितो भवति भार्गवदृष्टे।
शीतरश्मिखररश्मिसुताभ्यां वीक्षिते तु खलु वीर्यविहीनः॥१७॥
सध्वजे शशिजभार्गवदृष्टे द्विस्त्रिरुक्तिनिरतोऽपजनुर्वा।
स्वांशके शिखियुते शनिदृष्टे तापसो भवति वा परिचारी॥ १८॥
स्वांशके ध्वजयुते परिदृष्टे केवलेन शनिनाऽनृतदण्डी।
स्वांशके कमलबन्धुकविभ्यामीक्षिते तु पृथिवीपतिभृत्यः॥१९॥

स्वांशके सगुलिक इत्यादि—गुलिकस्तत्र प्रथमप्रवाहे। गरलेन विषेण। शेषं स्पष्टम्॥ ध्वजः केतुः। तथा वैतरपर्याये शुकजातके—'शिखी केतुर्ध्वजो धूम्रो मृत्युपुत्रोऽनिलस्तथा।' खरः क्रूरः। अमुत्र कर्णे रुजा रोगः॥ सोमपानवति यागे आदेशं सन् दीक्षितो भवति। दीक्षतेस्म, वा दीक्षा सञ्जातास्येति दीक्षितः॥ द्विस्त्रिरुक्तिः पुनः पुनर्भाषणं, तत्र निरतः। तत्प्रकृतिक इति भावः। अपजनुः अपकृष्टयोनिजन्मा। अधमजो वेति वा पाठः। परिचारी परिचारकः॥ अनृतदण्डी मिथ्यासन्यासी बाह्याडम्बरेण वैराग्यकोटिमापन्नो न वस्तुतो वैराग्यवान्॥१५-१९॥

**सगुलिके विषदो विषहतो वा॥१।२।२९॥ चन्द्रदृष्टे चौरापहृतधनश्चोरो वा॥१।२।३०॥ बुधमात्रदृष्टे बृहद्बीजः॥१।२।३१॥ तत्र**

केतौ पापदृष्टे कर्णच्छेदः कर्णरोगो वा ॥ १।२।३२ ॥ शुक्रदृष्टे दीक्षितः ॥ १।२।३३ ॥ बुधशनिदृष्टे निर्वीर्यः ॥ १।२।३४ ॥ बुधशुक्रदृष्टे पौनःपुनिको दासीपुत्रो वा ॥ १।२।३५ ॥ शनिदृष्टे तपस्वी प्रेष्यो वा ॥ १।२।३६ ॥ शनिमात्रदृष्टे संन्यासाभासः ॥ १।२।३७ ॥ तत्र रविशुक्रदृष्टे राजप्रेष्यः ॥ १।२।३८ ॥

'सगुलिके' इत्युपादानाद् 'रविराहुभ्याम्' इति निवृत्तम् । कारकांशे गुलिकेन सहिते विषदो विषप्रयोगकर्ता भवति । वा स्वयं विषेण विषप्रयोगेण हतो भवति ॥ 'सगुलिके' इत्यग्रिमसूत्रद्वयं यावदनुवर्त्यते ॥ तत्र केताविति । तत्र कारकांशे केतौ विद्यमाने शेषं स्पष्टम् । तत्र ग्रहणात् 'सगुलिके' इति निवृत्तम् । 'केतौ इत्यग्रिमेषु' 'शुक्रदृष्टे' इत्यादिषट्सु सूत्रेष्वनुवर्तते ॥ पौन पुनिकः, पुन पुनर्भाषणकर्ता; न ॥ पुनर्भूपुत्र. पौनर्भव इति ॥ तत्र रविशुक्रदृष्ट इति । तत्र कारकांश इत्यर्थः । तत्र ग्रहणात्केतौ इति निवृत्तम् ॥ गौरवेऽपि भ्रान्तिभञ्जनार्थमित्थमनुवृत्तिः यद्यप्यत्र प्रति- पद्यमुपनिबद्धा 'रविराहुभ्या' इत्यादि षोडशसूत्र्या ग्रहयोगादिना फलान्युक्तानि ॥

स्वांशकाद्दशमभे बुधयुक्ते वेक्षिते प्रथितवृत्तिपरः स्यात् ।
स्वीक्षिते स्वतरलो गुरुमात्रालोकिते तपनभाजि तु गोपः ॥ २० ॥
स्वांशकात्सलिलभे शुरुभृग्वोर्दृष्टियोगयुजि सौधविहारी ।
उच्चगद्युचरगेऽपि तथैवाग्वार्किसंगिनि शिलागृहभोगी ॥ २१ ॥
इष्टकागृहमसृग्ध्वजयोगे दारवं सदनमीज्यसमेते ।
तार्णसद्मनलिनीपतियुक्ते कारकांशकचतुर्थगृहे स्यात् ॥ २२ ॥
आत्मकारकलवान्नवमर्क्षे सौम्यवीक्षणसमागमसत्त्वे ।
धर्मसत्यनिरतो गुरुभक्तः पापदृष्टिसहिते तु विलोमम् ॥ २३ ॥
मन्दराहुकृतदर्शनयोगे कारकांशनवमे हि गुरुद्विट् ।
अर्कजीवयुतिवीक्षणसत्त्वे नो भवेद्गुरुजने मतिदार्ढ्यम् ॥ २४ ॥
अर्धमे भृगुमहीसुतवर्गे जायते परकलत्रनिषेवी ।
आस्थानमवलोकयुतिभ्यां केतुना भवति तत्प्रतिबन्धः ॥ २५ ॥
क्लेशभाजि कुजभार्गववर्गे जीवयोगदृशि योषिति लोलः ।
सैंहिकेययुतिवीक्षणसत्त्वे कामिनीकरणकोऽर्थविनाशः ॥ २६ ॥

स्वांशकादित्यादि—स्वांशकाद्दशमभे कारकांशकुण्डल्या दशमस्थान इत्यर्थः । बुधयुक्तेऽथवा बुधेक्षिते । स्वीक्षिते शुभेन ईक्षिते ॥ अतरलः स्थिरः । गुरुमात्रदृष्टे रविगते तु गोपः । सर्वत्र दशमभे इत्यन्वेति ॥ सलिलभं चतुर्थस्थानम् । उच्चग- द्युचरगे उच्चराशिगतग्रहस्थिते तथैव सौधविहारी स्यात् । अगू राहुः, आर्किः शनिः ॥

तार्णसद्म तृणगृहम् ॥ विलोमी धर्मात् सत्याद् गुरुभक्तेश्च च्युतः स्यादित्यर्थः ॥ मतिदार्ढ्यं श्रद्धायोग ॥ 'तत्र' इति ग्रहणात् 'समे' इति निवृत्तम् । तत्र (=$\frac{२६}{१२}$=२) द्वितीये ॥ भृगुमहीसुतवर्गे शुक्रस्य भौमस्य वा वर्गे षड्वर्गे । यद्यपि वर्गशब्दस्य सामान्यवचनतया तत्र तत्र स्मर्यमाणो य. कोऽपि समुदायो ग्रहीतु शक्यस्तथापि षड्वर्गो ग्राह्य । बहूना सवादात् । पर वृद्धोक्ते षड्वर्गे सप्तमांशो गृहीत , गर्गाद्युक्ते तु त्रिंशांश इति भेद । तथा च गर्ग —'क्षेत्र होराथ द्रेष्काणो नवांशो द्वादशांशक । त्रिंशांशकश्च वर्गोऽय सर्वैस्तु समुदाहृतः ॥' इत्येवमन्येऽपि । आवसानं मरणान्तं यावत् ॥ कामिनी परस्त्रीकरण हेतुर्यस्य स । शेष स्पष्टम् ॥ २०—२६

**रिष्फे बुधे बुधदृष्टे वा मन्दवत् ॥ १।२।३९ ॥ शुभदृष्टे स्थेयः ॥१।२।४० ॥ रवौ गुरुमात्रदृष्टे गोपालः ॥ १।२।४१ ॥ दारे चन्द्रशुक्रदृग्योगात्प्रासादः ॥ १।२।४२ ॥ उच्चग्रहेऽपि ॥ १।२।४३ ॥ राहुशनिभ्यां शिलागृहम् ॥ १।२।४४ ॥ कुजकेतुभ्यामैष्टिकम् ॥ १।२।४५ ॥ गुरुणा दारवम् ॥ १।२।४६ ॥ तार्णं रविणा ॥ १।२।४७ ॥ समे शुभयोगाद्धर्मनित्यः सत्यवादी गुरुभक्तश्च ॥ १।२।४८ ॥ अन्यथा पापैः ॥ १।२।४९ ॥ शनिराहुभ्यां गुरुद्रोहः ॥ १।२।५० ॥ रविगुरुभ्यां गुरावविश्वासः ॥ १।२।५१ ॥ तत्र भृग्वङ्गारकवर्गे पारदारिकः ॥ १।२।५२ ॥ दृग्योगाभ्यामधिकाभ्यामामरणम् ॥ १।२।५३ ॥ केतुना प्रतिबन्धः ॥ १।२।५४ ॥ गुरुणा स्त्रैणः ॥ १।२।५५ ॥ राहुणार्थनिवृत्तिः ॥ १।२।५६ ॥**

रिष्फे (=$\frac{३२}{१२}$=१०) कारकांशाद्दशमे । मन्दवत् 'प्रसिद्धकर्माजीवः शनौ' इति व्यवहितसूत्रोक्त फल स्यात् । आचार्यस्यैव प्रणयनशैली । 'यथा–' मृत्युवज्जायामिकणश्च १।२।७, इत्यत्र 'रिष्फे' इत्यादिनिसूत्र्या स्वांशकाद् दशमभे फलान्युक्तानि ॥ स्थेय इति । 'स्थेयो विवादपक्षस्य निर्णेतरि पुरोहिते' इति मेदिनीकर. ॥ दारे (=$\frac{३६}{१६}$=४) कारकांशाच्चतुर्थे ॥ 'दारे' इत्यादिपदसूत्र्या स्वांशकात्सलिलभे फलान्युक्तानि ॥ समे (=$\frac{३६}{३}$=९) कारकांशान्नवमे ॥ 'समे' इत्यादिनवसूत्र्या आत्मकारकस्वांशनवमर्क्षे फलान्युक्तानि ॥ दृग्योगाभ्यामिति । स्वांशकाद् द्वितीये भृगुकुजान्यतरषड्वर्गे भृगुकुजयोर्दृष्टियोगाभ्यामामरणात्पारदारिको भवति ॥ अत्र 'भृग्वङ्गारकवर्गे इत्यनुवर्तनाद् 'अधिकाभ्याम्' इति वक्तुं शक्यम् ॥

स्वांशकास्तभवनेऽब्जगुरुभ्यां संयुते भवति हारि कलत्रम् ।
राहुणा तु विधवा शनिना स्याद्रोगिणी बहुवयाः सुतपा वा ॥२७॥
जायते क्षितिसुता विकलाङ्गी भास्वता स्वसदनेऽप्ययदक्षा ।
चान्द्रिणा सकलसत्तमराशौ संयुते सकलया कलयाढ्या ॥ २८ ॥

उक्तयोगघटने खलु कर्के कामिनीवदनसौरभचौरे ।
भावयन्ति कलिताखिलभावाः प्राग्वधूरतिमनावृतदेशे ॥ २९ ॥
आत्मकारकलवात्सहजर्क्षे पापखेटकलिते खलु शूरः ।
जायते विमलखेचरयोगे साध्वसागमनकम्पितचेताः ॥ ३० ॥
स्वांशतः सहजशात्रवभावे क्रूरसंगिनि भवेत्कृषिकारी ।
वाक्पतौ नवमभे तु विशेषाज्जायते कृषिकलासु विदग्धः ॥ ३१ ॥

स्वांशकास्त्रेत्यादि—जायास्थाने राहुणाधिष्ठिते तु विधवा । पुनर्भूर्भार्या भवतीत्यर्थः ॥ सकलया संपूर्णया कलया चातुर्या; चतुःषष्टिसंख्यापरिच्छिन्नया वा आढ्या ॥ उक्तयोगघटने तत्तत्स्त्रीविशेषप्राप्तियोगघटनायां सत्याम् शेषं स्पष्टम् ॥ साध्वसं भयं तदागमनेन कम्पितं चेतो यस्येति । भीरुरित्यर्थः ॥ कृषिकला अर्थशास्त्रप्रतिपादिता नानाविधाः ॥ २७—३१ ॥

लाभे चन्द्रगुरुभ्यां सुन्दरी ॥१।२।५७॥ राहुणा विधवा ॥१।२।५८॥ शनिना वयोधिका रोगिणी तपस्विनी वा ॥१।२।५९॥ कुजेन विकलाङ्गी ॥१।२।६०॥ रविणा स्वकुले गुप्ता च ॥१।२।६१॥ बुधेन कलावती ॥१।२।६२॥ चापे चन्द्रेणानावृते देशे ॥१।२।६३॥ कर्मणि पापे शूरः ॥१।२।६४॥ शुभे कातरः ॥१।२।६५॥ मृत्युचिन्त्ययोः पापे कर्षकः ॥१।२।६६॥ समे गुरौ विशेषेण ॥१।२।६७॥

लाभे $(=\frac{४३}{१२}=७)$ कारकांशात्सप्तमे 'लाभे' इत्यादिसप्तसूत्र्या 'स्वांशकास्त्रभवने' फलान्युक्तानि ॥ 'रविणा स्वकुले गुप्ता च' इत्यत्र चकारेण विकलाङ्ग्यपि ॥ चापे $(=\frac{१६}{१२}=४)$ कर्के तत्तत्स्त्रीविशेषघटकयोगप्राप्तौ सत्यामनावृते देशे प्रायिको भोग इति सर्वे । कारकांशात्सप्तमे धनुषि चन्द्रे वेति कृष्णानन्दसरस्वतीनीलकण्ठौ ॥ कर्मणि $(=\frac{५१}{१२}=३)$ कारकांशात्तृतीये ॥ 'शुभे' कातरः, इत्यत्रापि तृतीय इति संबध्यते ॥ एवमग्रिमसूत्रे तृतीयस्थानलाभेऽपि मृत्युपदद्वोत्यं तत्कथनं मृत्युचिन्त्ययोः समुदायेनैकयोगतां बोधयति । मृत्युचिन्त्ययोः $(\frac{१५}{१२}=३)$,$(\frac{६६}{१२}=६)$ कारकांशात्तृतीयषष्ठयोः ॥ समे $(=\frac{५७}{१२}=९)$ कारकांशान्नवमे । शेषं पद्यतः सुगमम् ॥

स्वांशतः शुभयुते शुभलोको द्वादशे शिखिविकासिनि मुक्तिः ।
मीनकर्कटगते तु विशेषात्पापभाजि तु भवेत्तदनाप्तिः ॥ ३२ ॥
द्वादशेऽर्कशिखिसंगिनि शंभौ शीतपदिमसहिते तु भवान्याम् ।
भार्गवेण कलिते तु रमायां भक्तिरार्युजि शक्तिधरे स्यात् ॥ ३३ ॥

चन्द्रसूनुशनियोगिनि विष्णौ वागधीशयुजि साम्बशिवे धीः।
राहुभाजि महिषासुरहन्त्र्यां तामसेऽपि विबुधे व्ययधाम्नि ॥ ३४ ॥
सध्वजे गणपतौ च षडास्ये पापमन्दिरमुपेयुषि मन्दे ।
भार्गवेऽपि च भवेन्मतिसक्तिः क्षुद्रदैवतगणे व्ययगेहे ॥ ३५ ॥
मन्त्रिकारकलवादरिभावेऽप्येवमेव विमृशेत्सुरभक्तिम् ।
स्वांशतो नवमपञ्चमगेहे मान्त्रिको भवति पापयुगाढ्ये ॥ ३६ ॥
पापयुग्मकलिते सुतपुण्ये क्रूरदृष्टियुजि निग्रहकर्ता ।
सौम्यखेचरनिरीक्षणसत्वे जायते ध्रुतमनुग्रहकर्ता ॥ ३७ ॥

स्वांशत इत्यादि—कारकांशाद् द्वादशे शुभगते शुभग्रहाधिष्ठिते शुभलोकः । कर्मतारतम्येनतत्तल्लोकप्राप्तिरित्यर्थः । शिखिविकासिनि मुक्ति॰ विदेहमुक्तिः स्यात् । सा च तत्त्वज्ञानिनो भोगेन प्रारब्धकर्मक्षये वर्तमानशरीरपातो भाविशरीरानारम्भो वा । कारकांशाद्द्वादशे मीनकर्कान्यतरगते शिखिविकासिनि तु विशेषान्मुक्तिर्जीवन्मुक्तिः स्यात् । सा च श्रवणादिभिरुत्पन्नसाक्षात्कारस्य विद्वत्सन्यासिनः कर्तृत्वाद्यखिलबन्धप्रतिभासनिवृत्तिः । पापभाजि तु नयोः शुभलोकमुक्त्योरनाप्तिरलाभो भवेत् । अत्र केतोर्मुक्तिघटकतया न तत्प्रतिबन्धे कारणता । अचिन्त्या हि योगाः । केशवस्तु—'अन्त्ये कारकभागत शुभखगे स्याद्देवलोके नरः' केतौ द्वादशराशिगे शुभयुते चेत्कारकांशाद्भवेत् । मुक्तिर्मेषगते तु कार्मुकगते वा कारकांशे शुभेनाढ्ये मुक्तिर्जे व्यये घनुषि वा केतुस्तु सायुज्यकृत्, ॥' इति व्याख्यातवान् ॥ कारकांशाद् द्वादशेऽर्कशिखिखगिनि सूर्यकेतुभ्यां सहिते शम्भौ भक्तिः स्यात् । शीतरश्मिना केवलेन चन्द्रेण सहिते तु भवान्यां भक्तिः । एवमग्रेऽपि ॥ साम्बशिवे सकले ब्रह्मणि । वागर्थयोरिव सम्पृक्तयोः पार्वतीपरमेश्वरयोरित्यर्थः । तामसे विबुधेऽपि तमोगुणप्रधानदेवतायां धीर्भक्तियोग इति योजना । व्ययधाम्नि कारकांशाद् द्वादश इत्यर्थः ॥ पापमन्दिरं पापग्रहराशिमुपेयुषि प्राप्ते । क्षुद्रदेवता भूतवेतालाद्याः ॥ मन्त्रीत्यादि स्पष्टम् । विशेषः सूत्रान्तःपाती ॥ ३२—३७ ॥

उच्चे शुभे शुभलोकः ॥१।२।६८॥ केतौ कैवल्यम् ॥१।२।६९॥ क्रियचापयोर्विशेषेण ॥१।२।७०॥ पापैरन्यथा ॥१।२।७१॥ रविकेतुभ्यां शिवे भक्तिः ॥१।२।७२॥ चन्द्रेण गौर्याम् ॥१।२।७३॥ शुक्रेण लक्ष्म्याम् ॥१।२।७४॥ कुजेन स्कन्दे ॥ १।२।७५॥ बुधशनिभ्यां विष्णौ ॥१।२।७६॥ गुरुणा साम्बशिवे ॥१।२।७७॥ राहुणा तामस्यां दुर्गायां च ॥१।२।७८॥ केतुना गणेशे स्कन्दे च ॥ १।२।७९॥ पापर्क्षे मन्दे क्षुद्रदेवतासु ॥ १।२।८०॥

शुक्रे च ॥१।२।८१॥ अमात्यदासे चैवम् ॥१।२।८२॥ त्रिकोणे पापद्वये मान्त्रिकः ॥१।२।८३॥ पापदृष्टे निग्राहकः ॥१।२।८४॥ शुभदृष्टेऽनुग्राहकः ॥१।२।८५॥

उच्चे (=$^{६}_{१}$$^{०}_{२}$=१२) कारकांशाद् द्वादशे। उच्च इत्यादिवत्तु सूर्यालोकान्तरादिविचार ॥ शुभलोका भूरादयः। तथा च श्रूयते—'य एतद्ब्रह्मचावालं नित्यमधीते स भूर्लोकं जयति स भुवर्लोकं जयति स सुवर्लोकं जयति स महर्लोकं जयति स जनलोकं जयति स तपोलोकं जयति स सत्यलोकं जयति स सर्वांल्लोकाञ्जयति' इति ॥ 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि ॥' इति च ॥ कारकांशाद् द्वादशे केतौ कैवल्यम् । केवलस्य भावः ॥ क्रियचापयोः (=१२,$^{१}_{२}$$^{१}_{२}$=४) मीनकर्कयोः कारकांशाद् द्वादशगतयोः केतुनाधिष्ठितयोर्विशेषेण कैवल्यं मुक्तिः स्यात् ॥ कारकांशाद्द्वादशे पापैरन्यथा न शुभलोको न वा कैवल्यम् ॥ 'रविकेतुभ्या' इत्यादि दशसूत्र्या परमेश्वरस्य लीलाविग्रहेषूपासनैकहेतुकी भक्तिरुद्दिष्टा। एक एव परमेश्वरोऽनेकधा श्रूयते—'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥' इति। 'एकं सन्तं बहुधा कल्पयन्ति' 'यो देवानां नामधा एक एव'। इति च। अतएव पातञ्जलदर्शने—'यथाभिमतध्यानाद्वा' इति सूत्रितम् ॥ कारकांशाद् द्वादशे पापर्क्षे क्षुद्रदेवताभक्तिघटकमन्दशुक्राभ्यामेकयोगो न कृतः, अन्यतरस्य तत्प्रयोजकत्वाद्। अवशिष्टानि सूत्राणि स्पष्टानि पद्यतो व्याख्यातानि च ॥ अमात्येति सूत्रेणैव पदस्थारस्याद्देवताभक्तिरतिदिश्यते तत्रापि तत्र तत्र सूत्रेषु प्रयुक्तेव दासशब्देन षष्ठो राशिरेव बुध्यतेऽन्यथा 'पितृनुचराद्' इत्यादिवद् 'अमात्यानुचरे च' इत्येव ब्रूयात् । ततोऽयमर्थः—अमात्यकारकाद्दासे (=$^{४}_{१}$$^{८}_{२}$=६) षष्ठभावेऽप्येव पूर्वोक्तग्रहयोगे घटमाने तत्तद्देवताभक्तिः स्यादिति तत्त्वम् ॥ 'त्रिकोणे' इति सूत्रत्र्या मन्त्रसिद्धिप्रभाव सूच्यते। स्मर्यते च पातञ्जले—'जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः' इति ॥

आत्मकारकलवे शशिसक्ते शुक्रदृष्टिघटिते रसवादी।
शीतरश्मिसहिते वदपत्यावेक्षिते तु भिषजं कथयन्ति ॥ ३८ ॥
बान्धवे तुहिनदीधितियुक्ते श्वेतकुष्ठकलितः कविदृष्ट्या।
भूमिनन्दनदृशा पृथुरोगो नीलकुष्ठनिरतो ध्वजदृष्ट्या ॥ ३९ ॥
बन्धुलग्नसद्मने कुजराह्वोः संस्थितौ रचयति क्षयरोगम्।
निश्चयेन हिमदीधितिदृष्ट्या भूसुतस्तु पिटकादिपरीतम् ॥ ४० ॥
बन्धुभे च सुतभे शिखियुक्ते जायते जलरुजा ग्रहणी वा।
सैंहिकेयगुलिकस्थितिसत्त्वे क्षुद्रकायविषवृत्तिविचित्रः ॥ ४१ ॥

**आत्मकारकलवात्किल तुर्ये तिग्मरश्मिसुतभाजि धनुष्मान् ।**
**केतुसंगिनि भवेद्घटिकाकृच्चान्द्रिभाजि तु यती लगुडी वा ॥ ४२ ॥**
**स्वांशतः सुखगृहे तमयुक्ते लोहयन्त्रकलनासु विदग्धः ।**
**पद्मिनीरमणसंगिनि खड्गी जायते रुधिरयोगिनि कुन्ती ॥ ४३ ॥**

आत्मकारकलव इत्यादि—तदपत्यं बुधः ॥ कुजराह्वोः संस्थितिरवस्थानम् ॥ जलरुजा जलरुक् ॥ घटिका कालसाधनयन्त्रम् । तच्च स्थिरचलभेदेनानेकस्वरूपम् । यती आत्मज्ञाननिष्ठः । लगुडी दण्डादिबाह्यलिङ्गमात्रधारी ॥ लोहयन्त्राणि कलादिप्रयुक्तानि नानाभङ्गिभाञ्जि । पद्मिनीरमणो रविः ॥ ३८—४३ ॥

**शुक्रेन्दौ शुक्रदृष्टे रसवादी ॥१।२।८६॥ बुधदृष्टे भिषक् ॥ १।२।८७॥ चापे चन्द्रे शुक्रदृष्टे पाण्डुश्वित्री ॥१।२।८८॥ कुजदृष्टे महारोगः ॥१।२।८९॥ केतुदृष्टे नीलकुष्ठम् ॥ १।२।९०॥ तत्र मृतौ वा कुजराहुभ्यां क्षयः ॥१।२।९१॥ चन्द्रदृष्टौ निश्चयेन ॥१।२।९२॥ कुजेन पिटकादिः ॥१।२।९३॥ केतुना ग्रहणी जलरोगो वा ॥१।२।९४॥ राहुगुलिकाभ्यां क्षुद्रविषाणि ॥१।२।९५॥ तत्र शनौ धानुष्कः ॥१।२।९६॥ केतुना घटिकायन्त्री ॥१।२।९७॥ बुधेन परमहंसो लगुडी वा ॥१।२।९८॥ राहुणा लोहयन्त्री ॥१।२।९९॥ रविणा खड्गी ॥१।२।१००॥ कुजेन कुन्ती ॥१।२।१०१॥**

शुक्रः (=$\overset{२}{र}\overset{५}{श}$=१) प्राथम्यात्कारकांश एव, तत्रेन्दौ वर्तमाने शुक्रेण दृष्टे रसवादी, मन्त्रक्रियाबलेन पारदादिरसनिर्माता ॥ 'बुधदृष्टे भिषक्' इत्यत्र 'शुक्रेन्दौ' इत्यनुवर्तते ॥ चापे (=$\overset{१}{प}\overset{६}{च}$=४) कारकांशाच्चतुर्थे चन्द्रे । शेषं स्पष्टम् ॥ चापे चन्द्रे, इत्यंशोऽग्रिमसूत्रयोरपि सबध्यते । तत्र कारकांशाच्चतुर्थे; मृतौ (=$\overset{६}{त}\overset{५}{म}$=५) पञ्चमे ॥ 'तत्र मृतौ' इति पदद्वयी 'चन्द्रदृष्टौ' इत्यादिसूत्रचतुष्टयी यावदनुवर्तते ॥ 'तत्र शनौ धानुष्कः', इत्यत्र केवलं तत्रेति ग्रहणान्मृताविति निवृत्तम् ॥ तथा 'तत्र' इति पदं 'केतुना' इत्यादिसूत्रपञ्चकेऽनुवर्तते ॥ इह शुक्रेन्दाविति सूत्राभ्यामगदकारयोगावभिधाय तदग्रिमेण सूत्राष्टकेन गदयोगा अभिहिता इति बहवः । तच्चिकित्सका इति कतिपये । तत्र रुक्षणा स्वीकार्या । एवं पद्यास्तमप्युभयथा व्याख्यातुं सुशकम् । तत्र शनाविति सूत्रपञ्चकेन धनुराद्युपजीविनो निरूपिता इति ॥

**आत्मकारकलवे तनये वा ग्रन्थकृद्भवति चन्द्रगुरुभ्याम् ।**
**किंचिदून इह चन्द्रकविभ्यां शीतदीधितिभुवा तु ततोऽपि ॥४४॥**
**स्वांशे सुते वा कविसंश्रयेण वाग्मी कविः काव्यविचक्षणः स्यात् ।**
**जीवेन सर्वत्र निविष्टबुद्धिर्ग्रन्थप्रणेतापि भवेन्न वाग्मी ॥४५॥**
**सवेदवेदाङ्गविन्मर्शकारी विशिष्य वैयाकरणोऽपि तत्र ।**
**सभाजडो भास्करनन्दनेन मीमांसकः स्याच्छशिदारकेण ॥ ४६ ॥**

कणादवाणीवरणे प्रवीणो नैयायिकः स्यात्क्षितिनन्दनेन ।
निशाधिनाथेन स सांख्ययोगे साहित्यगानेऽपि निविष्टबुद्धिः ॥४७॥
वैदान्तिको गीतकलासु कल्यः प्रजायते पङ्कजबान्धवेन ।
तत्तद्विधा जालजटालमेये शिखावता स्याद्गणितेऽग्रगण्यः ॥ ४८ ॥
वागीशसंबन्धविशेषसत्त्वे सत्संप्रदायाकलनेषु सिद्धः ।
स्वांशाद् द्वितीयेऽपि विचार्यमेतत्केचित्तृतीयेऽपि विचारयन्ति॥४९॥

आत्मकारकश्च इत्यादि । ततोऽप्यूनो ग्रन्थकृदिति योजना ॥ स्वांशे सुत इत्यादय उपजातयः । वाग्मी वाचोयुक्तिपटुः । काव्यं कविकर्म, तत्र विचक्षणः । सर्वत्र निविष्टबुद्धिः । अपरिचितेऽपि वस्तुनि अक्रममाणमतिरिति तात्पर्यम् ॥ वेदा ऋग्यजुःसामाथर्वाणः तद्ब्राह्मणानि ॥ वेदाङ्गानि शिक्षादयः षट् । तथा च मुण्डके श्रूयते—'तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं ज्यौतिषमिति' इति । वैयाकरणः । व्याकरणं शब्दानुशासनम्, तच्च प्रातिशाख्यसूत्रवार्तिकभाष्यात्मकम् । मीमांसकः । मीमांसा, भगवता जैमिनिना प्रणीता द्वादशाध्यायी ॥ नैयायिकः । न्यायो न्यायदर्शनं भगवता गौतमेन प्रणीतं पञ्चाध्यायात्मकम् । 'प्रमाणैरर्थपरीक्षणं न्यायः' इति वात्स्यायनः । कणादवाणीवरणे प्रवीण इति प्रपञ्चार्थम् । कणादवाणी भगवता कणादेन प्रणीतं वैशेषिकदर्शनं दशाध्यायात्मकम् । सांख्यं भगवता कपिलेन प्रणीतं षडध्यायात्मकम् । योगो भगवता पतञ्जलिना प्रणीतं पादचतुष्टयात्मकम् । साहित्यं अलंकारशास्त्रम्, तत्र भावसाधनोऽलंकारशब्दः । गानं गान्धर्वविद्या अष्टादशसु परिसंख्याता । वैदान्तिकः । वेदान्तः भगवता कृष्णद्वैपायनेन प्रणीतश्चतुरध्यायात्मकः । गीतकलाः गीतान्येव कलाः, न तु गीतानि च कलाश्चेति द्वन्द्वः । कल्यः कुशलः । तत्तद्विधा जालजटालमये गणिते ताः वा दुरूहतया गाणितिकलोके प्रसिद्धा या विधाः प्रकाराः तासां आलैः प्रपञ्चैर्जटिलानि सङ्कुलानि मेयानि उपपत्तयो यत्र तादृशे, गणिते पाट्यादिव्यक्तान्ते ॥ संप्रदायाः हिरण्यगर्भादिगुरुपरम्परया प्रमिता विषयाः । स्वांशादितिमतभेदेन सारस्वतविचाराणामतिदेशौ । शेषं स्पष्टम् ॥४४-४५॥

मातापित्रोश्चन्द्रगुरुभ्यां ग्रन्थकृत् ॥१।२।१०२॥ शुक्रेण किंचिदूनम् ॥१।२।१०३॥ बुधेन ततोऽपि ॥१।२।१०४॥ शुक्रेण कविर्वाग्मी काव्यज्ञश्च ॥१।२।१०५॥ गुरुणा सर्वविद् ग्रान्थिकश्च ॥१।२।१०६॥ न वाग्मी ॥१।२।१०७॥ विशिष्यवैयाकरणो वेदवेदान्तविच्च ॥१।२।१०८॥ सभाजडः शनिना ॥१।२।१०९॥ बुधेन मीमांसकः ॥१।२।११०॥ कुजेन नैयायिकः ॥१।२।१११॥ चन्द्रेण सांख्ययोगज्ञः साहित्यज्ञो गायकश्च ॥१।२।११२॥ रविणा वेदान्तज्ञो गीतज्ञश्च ॥१।२।११३॥ केतुना गणितज्ञः ॥१।२।११४॥ गुरुसंबन्धेन संप्रदायसिद्धिः ॥१।२।११५॥ भाग्ये चैवम् ॥१।२।११६॥ सदा चैवमित्येके ॥१।२।११७॥

मातापित्रोः (=६४/५२=५, ६१/५२=१) कारकांशात्पञ्चमे कारकांशे वा चन्द्रगुरुभ्यां वर्तमानाभ्यां ग्रन्थकृत् ॥ 'मातापित्रोः' इति शुक्रेणेत्यादित्रयोदशसूत्रेषु सबध्यते । 'शुक्रेण' अनेनाग्रे कन्यादिफलस्य वक्ष्यमाणत्वाच्चन्द्रशुक्राभ्यामित्युचितम् । किंचिदूनं यथा स्यात्तथा ग्रन्थकृत् ॥ भाग्ये (=१४/५२=२) कारकांशाद् द्वितीये चैवं पूर्वोक्तग्रहयोगफलं ग्रन्थकर्तृत्वादि समूह्यम् ॥ सदा (=८७/५२=३) कारकांशात्तृतीयेऽप्येवं फलं वाच्यमित्येके आचार्याः समामनन्ति । मातापित्रोरित्यादि षोडशसूत्र्या विद्यायोगा दर्शिताः ॥

**स्वांशाद् द्वितीये शिखिना समेते स्यात् स्तब्धवाक् क्रूरखगेन दृष्टे ।**
**केमद्रुमः स्याच्च तनूपदाच्च धने च रन्ध्रेऽपि च पापसाम्ये ॥ ५० ॥**
**दारिद्र्यदुःखानलगन्धवाहः केमद्रुमः सोऽब्जदृशा बलीयान् ।**
**भानां खगानां च फलानि पाके भवन्ति अभ्याशयकल्पितानि ॥५१॥**

स्वांशादित्यादि । स्वस्मात् कारकात् । तनूपदात् लग्नारूढात् लग्नाच्च । दारिद्र्यदुःखमेव पीडोत्पादकत्वेनानलोऽग्निस्तन्नोद्दीपकत्वेन गन्धवाहोऽनिल इत्यर्थः । स केमद्रुमो योगः पाकावतारे स्वस्वदशायाम् । अभ्याशयः सत्यवादी सत्यवादो वा । तेन कल्पितानि विविच्य निर्दिष्टानि । शेषं स्पष्टम् ॥ ५०–५१ ॥

**भाग्ये केतौ स्तब्धवाक् ॥१।२।११८॥ स्वपितृपदाद्भाग्यरोगयोः पापसाम्ये केमद्रुमः ॥ १।२।११९॥ चन्द्रदृष्टौ विशेषेण ॥१।२।१२०॥ सर्वेषां चैवं पाके ॥१।२।१२१॥**

भाग्ये (१४/५२=२) कारकांशाद् द्वितीये केतौ पापदृष्टे सति स्तब्धवाक् शीघ्रकथनासमर्थः । स्व आत्मकारक प्रकरणात्, न तु स्वशब्देन पितृपदे विशिष्येते । पिता (=६७/१२=१) लग्नम्, पदं लग्नपदं, स्वश्च पिता च पदं चेति स्वपितृपदम् तस्मात् स्वपितृपदाद्, भाग्यरोगयोः (=३४/५२=२, ३३/१२=८) द्वितीयाष्टमयोः पापसाम्ये केमद्रुमाख्यो योग । स च चन्द्रदृष्टौ सत्यां विशेषेण भवति । परिपूर्ण इत्यर्थः । सर्वेषां राशीनां ग्रहाणां चापि फलानि पाके स्वस्वपाककाले भवन्तीति ॥

अथ द्वितीयपादपदार्थानुपसंहरति—

**इत्युक्तः शशधरबाण (५१) संख्यपद्यैः**
**शास्त्रार्थो मुनिवचनानुरुद्ध एव ।**
**तेनाद्यप्रशमितसंशयावतारं**
**छात्राणां नतिलतिका प्रतानिनी स्यात् ॥ ५२ ॥**

इत्युक्त इति । स्पष्टम् ॥ ५२ ॥ आदितः पद्यसंख्या ३६+५१=८७।

इति श्रीजैमिनिपद्यामृतवृत्तौ मूलकन्दलया द्वितीयः प्रवाहः ॥

अथ तृतीयः प्रवाहो विविच्यते । तत्र प्रथमं तावन्मुनीन्द्रप्रणमनपूर्वकमारूढकुण्डलीफलकीर्तनं सहेतुकं प्रतिजानीते—

फलितागमतत्त्वदर्शकं मुनिवर्यं प्रणमन्पदाश्रयात् ।
फलमुद्धृतसंशयोदयं दयमानं पिपठीःषु कीर्तये ॥ १ ॥

फलितेति । फल्यते निष्पद्यते शुभाशुभमनेनेति फलितं तदेव ऋष्यादिपरम्परया गमनादागमः तस्य यत्तत्त्वं रहस्यं तद्दर्शकमुपदेष्टारम् उक्तं चाचार्यविष्णुगुप्तेन—'अप्यर्णवस्य पुरुषः प्रतरन्कदाचिदासादयेदनिलवेगवशेन पारम् । न त्वस्य कालपुरुषाख्यमहार्णवस्य गच्छेत्कदाचिदनृषिर्मनसापि पारम् ॥' इति । मुनिवर्यं भगवन्तं जैमिनिं प्रणमन् तं प्रति प्रह्वीभवन् पिपठीःषु पिपठिषुषु छात्रेषु दयमानोऽनुकम्पितहृदयः सन्नहम् उद्धृत उन्मूलितः संशयोदयः संदेहप्रसरो यस्मिन्कर्मणि तद्यथा स्यात्तथा फलमादेशं पदाश्रयादारूढकुण्डल्यवलम्बनात्कीर्तये प्रतिपादये ॥ १ ॥

अथ पदम् ॥१।३।१॥

अथशब्दोऽधिकारार्थः । पदमारूढमधिकृतं वेदितव्यम् । ततः फलं वक्ष्यामीत्यर्थः । पदशब्देन प्रधानतो लग्नपदं जन्मलग्नमारूढं गृह्यते ॥

अथारूढकुण्डली ।



श्रीमन्तं लाभं चाह—

सखगे खगदृष्टिसंयुते पदलाभे(११)कमलाविलासभाक् ॥
शुभयुक्तनिरीक्षिते नयादनयादाप्तिरितोऽन्यथा भवेत् ॥ २ ॥

सखगे इति । पदादारूढाल्लाभे एकादशे सखगे खगदृष्ट्या संयुते कमलाविलास-भाक् । श्रीमानित्यर्थः । पदलाभे शुभयुक्ते शुभनिरीक्षिते नयान्न्यायादाप्तिर्लाभः । इतोऽन्यथा पापयुक्ते पापदृष्टे अनयादन्यायादाप्तिर्भवेत् ॥ २ ॥

व्यये सग्रहे ग्रहदृष्टे श्रीमन्तः ॥१।३।२॥ शुभैर्न्याय्यो लाभः ॥१।३।३॥ पापैरमार्गेण ॥१।३।४॥

व्यये (=११) पदादेकादशस्थाने । शेषं स्पष्टम् ॥ अधिकलाभं श्रीमन्तं फलावि-शेषं चाह—

धनलब्धिरतीव जायते निजतुङ्गादिगते ग्रहे भवे (११) ।
पदतो धनभे(२)कलाधिभूगुरुशुक्राध्युषिते श्रियां पदम् ॥ ३ ॥
धनधाम्नि निजोच्चराशिगद्युचरालम्बिनि लक्ष्मणो भवेत् ।
इह कारकभागवत्फलं कथयेत्प्राय उदीरितेतरत् ॥ ४ ॥

धनलब्धिरित्यादि । भवे पदादेकादशे निजतुङ्गादिगते ग्रहे सत्यधिका धनलब्धिः । आदिना 'स्वोच्चसुहृत्स्वत्रिकोणनवांशैः स्थानबलं स्वगृहोपगते च' इति संग्रहः । पदत आरूढाद् धनभे द्वितीये कलाधिभूगुरुशुक्राध्युषिते सति श्रियां संपदां पदं निवासः स्यात् धनधाम्नि द्वितीयभावे निजोच्चराशिगद्युचरावलम्बिनि उच्चस्थग्रहाधिष्ठिते सति लक्ष्मणः श्रीमान् भवेत् उदीरितेतरत् । कथितादन्यत् फलं कारकभागवत् कारकांश-कुण्डल्यामिवेहापि पदकुण्डल्यां कथयेत् प्रायो बाधकाभावे ॥ ३–४ ॥

उच्चादिभिर्विशेषात् ॥ १।३।५ ॥ चन्द्रगुरुशुक्रेषु श्रीमन्तः ॥१।३।१५॥ उच्चेन वा ॥१।३।१६॥ स्वांशवदन्यत्प्रायेण ॥१।३।१७॥

पदादेकादशे उच्चादिभिरुच्चादिस्थितग्रहैर्विशेषाल्लाभः । पदादेकादश इति पूर्वतो लभ्यते ॥ पदाद् द्वितीये चन्द्रगुरुशुक्रेषु वर्तमानेषु श्रीमन्तः । बहुवचनमविवक्षितम् । पदाद् द्वितीय इति पूर्वसूत्रतोऽनुवर्तते । अनुवृत्तिज्ञानार्थमेवात्र सूत्राणामग्रेऽध्यायपा-दसूत्राङ्का योजिताः ॥ पदाद् द्वितीये उच्चेन उच्चस्थग्रहेण वा श्रीमन्तः ॥ स्वांश इव स्वांशवत् कारकांशकुण्डल्यामन्यद् यद्यत्फलं निरूपितं तत्तत्सर्वत्र प्रायेण बाधकाभावे संग्राह्यं बाधकसत्त्वे तु त्याज्यम् ॥

श्रीमतां तत्प्रतिबन्धकं विशिष्टधनं चाह—

सुत (५) धर्म(९)गतेऽथवा चतुष्टयगे(१।४।७।१०) दारपदे पदं श्रियाम् ।
यदि तत्र न भामिनीपदं मनुजाः श्रीकरुणाविवर्जिताः ॥ ५ ॥

पदसप्तमयोः प्रजायते बहुदिष्ट्यार्गलपापरोधया ।
यदि तत्र पुनः शुभार्गलं धनवृद्धिः प्रथते विशेषतः ॥ ६ ॥

सुतेत्यादि । दारपदे सप्तमभावपदे लग्नपदात्सुतधर्मगते त्रिकोणस्थे चतुष्टयगे केन्द्रस्थे वा श्रियां पदं भवेत् । यदि तत्र दारपदं न स्यात् तदा मनुजाः श्रीकरुणाविवर्जिताः स्युः । पदसप्तमयोः लग्नपदतत्सप्तमयोः । सप्तमीद्विवचनम् । अपरोधया निष्प्रतिबन्धया बहुभाग्यं स्यात् । यदि पुनः पदसप्तमयोः शुभार्गलं भवेत्तदा तु विशेषतो धनवृद्धिः प्रथते॥५-६॥

लाभपदे केन्द्रे त्रिकोणे वा श्रीमन्तः ॥१।३।१८॥ अन्यथा दुःस्थाः ॥१।३।१९॥ पत्नीलाभयोर्दिष्ट्या निराभासार्गलया ॥१।३।२२॥ शुभार्गले धनसमृद्धिः ॥१।३।२३ ॥

लाभः (=४३/१२=७) सप्तमो भावः तत्पदे तदारूढे लग्नारूढात्केन्द्रे त्रिकोणे वा श्रीमन्तः । स्थानबहुत्वेन बहुवचनम् ॥ अन्यथा केन्द्रत्रिकोणवर्जितस्थाने दुःस्था दुःखिनः । 'दुःस्थे' इति पाठे सप्तमभावपदं षष्ठाष्टमव्ययगतं न भवतीति द्रष्टव्यम् ॥ पत्नी (=१) लाभयोः (=४३/१२=७) लग्नपदतत्सप्तमयोर्निराभासार्गलया निष्प्रतिबन्धार्गलया दिष्ट्या भाग्यं स्यात् । दिष्ट्येत्यव्ययम् । 'दिष्ट्याम्ब वे कुक्षिगतः परः पुमान्' इति श्रीमागवतम् ॥ लग्नपदतत्सप्तमयोः शुभार्गले साभासेऽपि धनसमृद्धिः स्यात् ॥ पूर्वसूत्रे तु निराभासार्गले भाग्यमिति विवेकः । अत्र वृद्ध-—'यस्य पापः शुभो वापि ग्रहस्तिष्ठेच्छुभार्गले । तेन दृष्टेक्षितं लग्नं प्राबल्यायोपकल्पते । यदि पश्येद्ग्रहस्तं न विपरीतार्गलस्थितः ॥ इति विशेषमाह स्म ।

राजयोगानाह—

नृप एकखगेन वीक्षिते जनिहोराघटिकाविलग्नके ।
अथवात्र विलग्नसप्तमे भवनांशात्रिलवावगाहिना ॥ ७ ॥
यदि चैकमपीह खण्डितं क्षितिपत्वे विकलत्वमादिशेत् ।
अनयैव दिशा दृकाणतो नवमांशाच्च परामृशेदिदम् ॥ ८ ॥
निजकारकतो द्विसागराशुगनागेषु (२।४।५।८) शुभे समे नृपः ।
स्वत एव तृतीयषष्ठयोः खलखेटे तुलिते धराधिपः ॥ ९ ॥
इति योगयुगं विचारयेत्तनुजायाभवनेशयोरपि ।
इह मिश्रनभश्चरस्थितौ मनुजः पार्थिवसंनिभो भवेत् ॥ १० ॥

नृप इत्यादि । 'जनिहोराघटिकाविलग्नके' तत्तत्कुण्डल्यां जन्मलग्ने होरालग्ने घटीलग्ने एकेन खगेन वीक्षिते सति नृपः स्यात् । लग्नत्रये यः कोऽप्येको दृष्टः धमान्दृष्टेति तात्पर्यम् । अथवात्र राश्यंशद्रेष्काणवशाल्लग्नसप्तमे दृष्टे नृपः । एतदुक्तं भवति—जन्महोरादित्रि कुण्डलीषु यौ लग्नसप्तमौ भावौ तत्रैकग्रहदृष्ट्या नृपः स्यात् । यदि च एकमपि इह जनिहोराघटिकाविलग्नके भवनांशत्रिलवे खण्डिते न्यूनं तदीक्षण-

तारतम्येन क्षितिपत्वे विकलत्वं वैकल्यमादिशेत् कथयेत्। तादृशदृश्यग्रहदर्शनाभावेन न्यूनो राजयोग इति भावः। अनयैव दिशा प्रकारेण नवमांशाद् दृकाणतश्चैदं सर्वं परामृशेद् विभावयेत्। अयं भावः—जन्मलग्नाश्रितनवांशकुण्डल्यां होरालग्नाश्रितनवांशकुण्डल्यां घटीलग्नाश्रितनवांशकुण्डल्यां तथा जन्मलग्नाश्रितद्रेष्काणकुण्डल्यां होरालग्नाश्रितद्रेष्काणकुण्डल्यां घटीलग्नाश्रितद्रेष्काणकुण्डल्यां च लग्नादिष्वेकग्रहदृष्टेषु राजानो भवन्ति। वृद्धोऽपि—'विलग्नघटिकालग्नहोरालग्नानि पश्यति। उच्चग्रहे राजयोगो लग्नद्वयमथापि वा॥ राशेर्दृकाणतोऽशाच्च राशेरंशादथापि वा। यद्वा राशिदृकाणाभ्यां लग्नद्रष्टा तु योगदः॥' इति। 'जन्मकालघटीलग्नेष्वेकेनेक्षितेषु तु। उच्चारूढे तु संशते चन्द्राकान्ते विशेषतः॥ कान्ते वा गुरुशुक्राभ्यां केनाप्युच्चग्रहेण वा। दुष्टार्गलग्रहाभावे राजयोगो न संशयः॥ इति च।

स्वतः कारकादेव। तुलिते संख्यया समे। इति योगयुगमिति। एतदुक्तं भवति—तनुजायाभवनेशयोरपि सकाशाद् द्विसागराशुगनागेषु क्रमे समे सति तथैवात्मकारकात्तृतीयषष्ठयोः खलखेटे तुलिते सति राजा स्यात्। शेषं स्पष्टम्॥ ७—१०॥

**जन्मकालघटिकास्वेकदृष्टासु राजानः ॥१।३।२४॥ पत्नीलाभयोश्च राश्यंशकदृकाणैर्वा ॥१।३।२५॥ तेष्वेकस्मिन्न्यूने न्यूनम् ॥१।३।२६॥ एवमंशतो दृकाणतश्च ॥१।३।२७॥ स्वभाग्यदारमातृभावसमेषु राजानः ॥१।३।३०॥ कर्मदासयोः पापयोश्च ॥१।३।३१॥ पितृलाभाधिपाच्चैवम् ॥१।३।३२॥ मिश्रे समाः ॥१।३।३३॥**

जन्मकालघटिकासु, जन्मलग्नहोरालग्नघटीलग्नेष्वित्यर्थः॥ जन्मकालघटिकासु पत्नी (=१) लग्नम्, लाभः (=११/१=७) सप्तमः तयोः पत्नीलग्नयोर्लग्नसप्तमभावयोरेकग्रहदृष्टयोः राश्यंशकदृकाणवशाद्राजानो वा॥ तेष्वेकस्मिन्न्यूने न्यूनमिति सूत्रेण किंचिद्वैकल्यं प्रतिपाद्यते। तदर्थस्त्वेवम्—ताश्च तानि च तानि 'नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम्' इत्येकशेषः। तेषु जन्मकालघटिकासु राश्यंशकदृकाणेषु चैकस्मिन्न्यूने सति न्यूनं राजत्वमित्यर्थः॥ एवमंशतो दृकाणतश्चेति जन्मसूत्रोक्तराजयोगस्यातिदेशः॥

अत्रैवं राजयोगानामुच्चावचत्वेनयः—जन्महोराघटीकुण्डलीषु जन्मलग्ने, सप्तमे, जन्मलग्नसप्तमयोः; होरालग्ने, सप्तमे, होरालग्नसप्तमयोः; घटीलग्ने, सप्तमे, घटीलग्नसप्तमयोः; एकस्य ग्रहस्य राश्यंशद्रेष्काणवशाद् दृष्टौ सत्यां नव राजयोगाः। जन्महोराघटीलग्नेषु चैक इति दशयोगाः। एवं जन्मलग्नादिनवमांशकुण्डलीषु दश, जन्मलग्नादिद्रेष्काणकुण्डलीषु दशयोगाः। अथ जन्महोराघटीलग्नेषु त्रिषु, तत्सप्तमेषु त्रिषु, लग्नतत्सप्तमद्वन्द्वेषु त्रिषु प्रत्येकं राश्यंशवशाद् राशिद्रेष्काणवशाद् अंशद्रेष्काणवशाद् एकग्रहस्य दृष्टौ सप्तविंशती राजयोगाः। तथा जन्महोरालग्नयोः, जन्मघटीलग्नयोः होराघटीलग्नयोः राश्यंशद्रेष्काणवशाद् एकग्रहदृष्टौ त्रय इति सप्तविंशत्या सह त्रिंशद्राजयोगाः। एवं नवांशकुण्डलीषु त्रिंशद् द्रेष्काणकुण्डलीषु त्रिंशदिति सर्वे संभूय विंशत्युत्तरं शतं राजयोगाः॥

स आत्मकारकः तस्माद् भाग्य($=\frac{१४}{१२}=२$) दार($=\frac{२८}{१२}=४$)मातृ($=\frac{६५}{१२}=५$) भावेषु ($=\frac{४४}{१२}=८$) द्वितीयचतुर्थपञ्चमाष्टमेषु स्थानेषु समेषु समसंख्येषु शुभेषु शुभग्रहेषु राजानः ॥ आत्मकारकात् कर्म ($=\frac{५१}{१२}=३$) दासयोः ($=\frac{७८}{१२}=६$) तृतीयषष्ठभावयोः समयोः पापयोः सत्वे राजानः । पितृ ($=\frac{६१}{१२}=१$) लाभयोः ($=\frac{४३}{१२}=७$) लग्नसप्तमयो-रधिपाश्चैवं द्वितीयचतुर्थपञ्चमाष्टमभावेषु समेषु शुभेषु, तथा तृतीयषष्ठभावयोः समयोः पापयोः सत्वे राजान इत्यर्थः ॥ इह शुभपापमिश्रणे सति समाः राजतुल्यविभूतय इत्यर्थः॥

दारिद्र्यमाह—

यदि योगयुगे शुभालये मलिनाः स्युर्मलिनालये शुभाः ।
भुवमत्र तदा दरिद्रता मुनिचूडामणिनोपदिश्यते ॥ ११ ॥

यदीति । यदि निजकारकत इति श्लोकोक्ते योगयुगे । शेषं स्पष्टम् ॥ ११ ॥

दरिद्रता विपरीते ॥१।३।३४॥

विपरीते 'स्वभाग्य' इति सूत्रोक्ते शुभस्थाने पापा एव, पापस्थाने 'कर्म' इति सूत्रोक्ते शुभा एव, तर्हि दरिद्रता स्यात् ॥

यानं वैतानिकं राजकीयं सेनानीं राजचिह्नं चाह—

अवलोकितयोः परस्परं दनुजाचार्यकुमुद्वतीशयोः ।
अथवा त्रिगृहान्तरस्थयोर्जनिमाञ्जायत एव यानवान् ॥ १२ ॥
गतयास्तु निकेतने क्वचित् क्षितिभूद्दानवपूज्यकेतुषु ।
मिथ ईक्षणकर्तृषु क्षमापतिलक्ष्मा खलु जायते जनः ॥ १३ ॥
उदयप्रमदाधिपात्सुते रजनीप्रेयसि वागधीश्वरे ।
दितिसूनुपुरोहितेऽथवा मनुजा भूरमणाधिकारिणः ॥ १४ ॥
तनुसप्तमवेश्मवल्लभात् सहजे ( ३ ) वा परिपन्थिसद्मनि
मलिनेन खगेन संयुते पृतनाशासनतत्परो भवेत् ॥ १५ ॥
निजकारकतश्चतुर्थगौ क्षणदानायकदैत्यमन्त्रिणौ ।
कुरुतो नृपलक्ष्मलाञ्छितं जनमातोद्यतरङ्गसंगिनम् ॥ १६ ॥

अवलोकितयोरित्यादि । दनुजाचार्यः शुक्रः । कुमुद्वतीशश्चन्द्रः । अथ परस्परं त्रि-गृहान्तरस्थयोः सतोः । तथा च वृद्धः—चन्द्रः कर्मि कविश्चन्द्रं पश्यत्यपि तृतीयगे । शुक्राच्चन्द्रे ततः शुक्रे तृतीये वाहनार्थवान् ॥ इति । क्षितिभूद्दानवपूज्यकेतुषु कुजशुक्र-केतुषु । क्षमापती राजा तल्लक्ष्मा, राजचिह्नवानित्यर्थः । उदयो लग्नं, प्रमदा सप्तमभावः, तदधिपात् सुते पञ्चमे रजनीप्रेयसि चन्द्रे, वागधीश्वरे गुरौ; अथवा दितिसूनुपुरोहिते शुक्रे सति मनुजा भूरमणाधिकारिणो राजकीयाः स्युः ॥ तनुसप्तमवेश्मनी लग्नसप्तम-भावौ तद्वल्लभात् तदधीशात् परिपन्थिसद्म षष्ठो भावः। पृतना सेना तच्छासने, तत्परो

भवेद् ॥ नृपलक्ष्मलाञ्छितं नृपचिह्नविशिष्टम् । ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥ चतुर्विधमिदं वाद्यमातोद्यमिति संकेत्यते । शेषं स्पष्टम् ॥ १२—१६ ॥

**शुक्रचन्द्रयोर्मिथो दृष्टयोः सिंहस्थयोर्वा यानवन्तः ॥१।३।२८॥ शुक्रकुजकेतुषु वैतानिकाः ॥१।३।२९॥ मातरि गुरौ शुक्रे चन्द्रे वा राजकीयाः ॥१।३।३५॥ कर्मणि दासे वा पापे सेनान्यः ॥१।३।३६॥ स्वदारगयोः शुक्रचन्द्रयोरातोद्यं राजचिह्नानि च ॥१।३।४५॥**

यत्र क्वापि वर्तमानयोर्मिथोदृष्टयोः शुक्रचन्द्रयोः; वा मिथः सिंह (=८७/१२=३) स्थयोः तृतीयस्थानं गतयोः शुक्रचन्द्रयोः, शुक्राच्चन्द्रे तृतीयगे वा चन्द्राच्छुक्रे तृतीयगे यानवन्तो भवेयुः ॥ यत्र क्वापि वर्तमानेषु परस्परमवलोकयत्सु शुक्रकुजकेतुषु वैतानिका राजलक्ष्माणः । वितानोऽभिविस्तृतिरिति दृष्ट्या याज्ञिका इति केचित् ॥ मातरीति । पितृलाभाधिपादित्यनुवर्तते । लग्नाधिपाद् सप्तमाधिपाच्च मातरि (=६५/१२=५) पञ्चमे गुरौ शुक्रे चन्द्रे वा राजकीयाः ॥ लग्नाधिपाद् सप्तमाधिपाच्च कर्मणि (=५१/१२=३) तृतीये दासे (=७८/१२=६) षष्ठे वा पापे सेनान्यः सेनापतयः ॥ स्वाद् आत्मकारकाद् दाराः (=२८/१२=४) चतुर्थो भावः, तान् गच्छत इति दारगौ । तयोः शुक्रचन्द्रयोः सतोरातोद्यं वादित्रं राजचिह्नानि छत्रचामरादीनि स्युः ॥

अनेकधा व्ययं तत्रातिदेशं चाह—

**पदतो युतिवीक्षणे व्यये सदसन्मिश्रकृते व्ययो महान् ।**
**रविराहुसितैर्नृपाद् व्ययो विधुदृष्ट्या तु विनिश्चयाद्भवेत् ॥ १७ ॥**
**शशिजेन सगोत्रवादतो गुरुणा स्यात्करमूलको व्ययः ।**
**कुजसौरिसमाश्रिते व्यये भवति भ्रातृमुखात्खलु व्ययः ॥ १८ ॥**
**व्ययगैर्व्यय ईरितो यथा धनलाभोऽपि तथैव लाभगैः ।**
**गगनेचरयोगदृष्टितः परिचिन्त्यो मतिमद्भिरादरात् ॥ १९ ॥**

पदत इत्यादि । पदत आरूढाद् व्यये सदसन्मिश्रकृते शुभाशुभमिश्रसंपादिते युतिवीक्षणे ग्रहाणा योगनिरीक्षणे सति महान् व्ययः । लग्नपदाद् द्वादशे शुभे सत्कर्मनिमित्तको व्ययः, अशुभे असत्कर्मनिमित्तको व्ययः, शुभाशुभग्रहसंयोगे संकीर्णकर्मनिमित्तको व्यय इति तात्पर्यम् ॥ सगोत्रवादतः सगोत्रादायादाः वादो विवादः ताभ्याम्, अथवाग्रे भ्रातृमुखादिति दर्शनाद् 'विवादबन्धुतः' इति पठनीयम् । तत्र बन्धवः परिभाविता ये केचन चेति द्रष्टव्यम् । करमूलकः, राजादिदेयद्रव्यं कर इत्युच्यते । स मूलं कारणं यस्य स करमूलकः । भ्रातृमुखात्, भ्रातरः सहजाः मुखशब्देन पितृव्यपुत्रादयः ॥ व्ययगैर्व्यय इति लाभविचारार्थमतिदेशः । गगनेचरयोगदृष्टितः ग्रहयुतिविलोकनाभ्यामित्यर्थः । शेषं स्पष्टम् । तथा च वृद्धाः—'आरूढाल्लग्नभवनं ग्रहः पश्येत्तु न व्ययम् । यस्य जन्मनि सोऽपि स्यात्प्रबलो धनवानपि । दृष्टग्रहाणां बाहुल्ये तदा भूरि

शुङ्गे। सार्गले चापि तत्रापि बह्वर्गलसमागमे॥ शुभग्रहार्गले तत्र तत्राप्युच्चग्रहार्गले शुखानि स्वामिना दृष्टे लग्नभाग्याधिपेन वा। ज्ञातस्य पुंसः प्राबल्यं निर्दिशेदुत्तरोत्तरम्। इति॥ १७–१९॥

**नीचे ग्रहद्वययोगाद् व्ययाधिक्यम् ॥१।३।६॥ रविराहुशुक्रैर्नृपात् ॥१।३।७॥ चन्द्रदृष्टौ निश्चयेन ॥१।३।८॥ बुधेन ज्ञातितो विवादाद्वा॥१।३।९॥ गुरुणा करमूलात् ॥१।३।१०॥ कुजशनिभ्यां भ्रातृमुखात् ॥१।३।११॥ ऐतैर्व्यय एवं लाभः ॥१।३।१२॥**

नीचे (=$\frac{६}{१}\frac{०}{२}$=१२) लग्नपदाद् द्वादशे। 'एवं लग्नपदाद्' इत्यग्रिमेषु पञ्चसु सूत्रेषु संबध्यते। सेयं पञ्चसूत्री स्पष्टार्था पद्यतो व्याख्याता च॥ एतैरिति। यथा द्वादशस्थानगतैरेतैर्ग्रहैर्व्यय उक्तः, एवमेव एकादशस्थानगतैरेतैर्लाभोऽप्युच्यते॥

उदरामयं सद्योबाधकं स्त्रीपुंसयोरनुरागं कलहं चाह—

**पदतो हि कलत्रभे शिखी यदि वागुरुश्च तदोदरामयः।**
**धनसद्मनि केतुसंयुते घटते बाधकलक्ष्म सत्वरम्॥ २०॥**
**यदि तिष्ठति केन्द्र (१।४।७।१०) कोणक (५।९) त्रिखलाभे (३।१०।११) स्तपदं तदा भवेत्।**
**प्रमदापुरुषानुकूलतातनयादिष्वपि चिन्तयेदतः॥ २१॥**
**यदि लग्नपदाद्वधूपदं पततिद्वादश(१२) रन्ध्र(८) शत्रुषु (६)।**
**बहुवैरकथाव्ययस्थितिः प्रमदापूरुषयोर्गृहस्थितिः॥ २२॥**

पदतो हीत्यादि। यदि वा अगू राहुः घटते संगच्छते॥ अस्तपदं सप्तमपदम्। अद इदमुक्तं तनयादिष्वपि चिन्तयेदिति फलातिदेशः॥ यदि लग्नपदाविस्ताभि 'तनयादिष्वपि मैत्रीवद्वैरमपि विचार्यत इति सिध्यति॥ तथा च वृद्धाः—'आरूढौ पुनमित्रोत्थ त्रिलाभे केन्द्रगौ यदि। द्वयोर्मैत्री त्रिकोणे तु साम्यं द्वेषोऽन्यथा भवेत्॥ एवं दारादिभावानामपि पत्न्यादिमित्रता। जातकद्वयमालोक्य चिन्तयमीदं विचक्षणैः॥ इति॥ २०–२२॥

**लाभे राहुकेतुभ्यामुदररोगः ॥१।३।१३॥ तत्र केतुना झटिति ज्यानिलिङ्गानि ॥१।३।१४॥ केन्द्रत्रिकोणोपचयेषु द्वयोर्मैत्री ॥१।३।२०॥ रिपुरोगचिन्तासु वैरम् ॥१।३।२१॥**

लाभे (=$\frac{४}{१}\frac{३}{२}$=७) लग्नपदात्सप्तमे॥ तत्र (=$\frac{२}{१}\frac{६}{२}$=२) लग्नपदाद् द्वितीये केतुना झटिति अनवसर एव ज्यानिः जीर्णता, तस्या लिङ्गानि चिह्नानि स्युः॥ लग्नपदात् सप्तमपदे केन्द्रत्रिकोणोपचयेषु वर्तमाने द्वयोः स्त्रीपुंसयोर्मैत्री। अत्रोपचयपदं षष्ठातिरिक्तं बोध्यमग्रिमसूत्रानुरोधात्॥ लग्नपदाद् रिपु (=$\frac{१}{१}\frac{२}{२}$=१२) रोग (=$\frac{३}{१}\frac{२}{२}$=८) चिन्तासु (=$\frac{६}{१}\frac{६}{२}$=६) द्वादशाष्टमषष्ठभावेषु सप्तमपदे वर्तमाने द्वयोः स्त्रीपुंसयोर्वैरं स्यात्॥

बुद्धिमत्सुखिदरिद्रव्ययशीलबलिन आह—

तनुकारकयोस्तत्त्रिपञ्चगतदृष्ट्या त्रिपञ्चेश्वरेक्षया ।
अथवा तनयेशवीक्षया धिषणद्यां धिषणायते जनः ॥ २३ ॥
तनुकारकयोस्ततः सुखाधिपदृष्ट्या सुखभाक् प्रजायते ।
उदये निजकारकेऽपि चाष्टमपेक्षा कुरुते दरिद्रताम् ॥ २४ ॥
तनुकारकयोस्ततो व्ययाधिपदृष्ट्या व्ययकारको भवेत् ।
उदये तदधीशवीक्षिते बलिनो जन्म तथात्मकारके ॥ २५ ॥

तनुकारकयोरित्यादि । तनुकारकयोरिति सप्तमीद्विवचनम् । ततः तनुकारकाभ्यामित्यर्थः। त्रिपञ्चगतदृष्ट्या तृतीयपञ्चमस्थग्रहावलोकनेन; त्रिपञ्चेश्वरेक्षया तृतीयपञ्चमस्वामिदृष्ट्या; अथवा तनयेशवीक्षया पञ्चमेशावलोकनेन, धिषणद्यां बुद्धिसम्पत्त्या धिषणायते। धिषणो बृहस्पतिः स इवाचरति । क्यङ् ॥ उदये लग्ने । अष्टमपेक्षा अष्टमेशस्यावलोकनम् ॥ तथा आत्मकारके तदधीशवीक्षिते । कारकेशदृष्टे इत्यर्थः ॥ २३–२५ ॥

स्वपितृभ्यां कर्मदासस्थदृष्ट्या तदीशदृष्ट्या मातृनाथदृष्ट्या च धीमन्तः ॥१।३।३७॥ दारेशदृष्ट्या सुखिनः ॥१।३।३८॥ रोगेशदृष्ट्या दरिद्राः ॥१।३।३९॥ रिपुनाथदृष्ट्या व्ययशीलाः ॥१।३।४०॥ स्वामिदृष्ट्या प्रबलाः ॥१।३।४१॥

स्व आत्मकारकः, पिता (=६१ ११=१) लग्नम्, ताभ्यामात्मकारकपितृभ्यां सकाशात् कर्म (=१४ ११=३) तृतीयो भावः, दासः (=८१ ११=६) षष्ठः, तद्गतग्रहदृष्ट्या; तदीशदृष्ट्या; माता (=६१ ११=५) पञ्चमो भावः, तन्नाथदृष्ट्या च अर्थादात्मकारके लग्ने च धीमन्तः ॥ 'स्वपितृभ्याम्' इति दारेशेत्यादिसूत्रचतुष्टयेऽन्वेति ॥ आत्मकारके लग्ने च दाराः (=८१ ११=४) चतुर्थो भावस्तदीशदृष्ट्या सुखिनः ॥ आत्मकारके लग्ने च रोगः (=२१ ११=८) अष्टमो भावस्तदीशदृष्ट्या दरिद्राः ॥ आत्मकारके लग्ने च रिपुः (=२१ ११=१२) द्वादशो भावस्तन्नाथदृष्ट्या व्ययशीलाः ॥ आत्मकारके लग्ने च स्वामिदृष्ट्या प्रबलाः स्युः ॥

अनेकधा बन्धनमाह—

तनुतोऽर्कदशो (१२।२) त्रिकोणके (५।९) रविरिप्वो (१२।६) र्भवती तिहोत्रयोः (११।३) ।

अथवा सुखकर्मसद्मनो (४।१०) र्ग्रहसाम्ये सति बध्यते जनः ॥२६॥
इह भावतदीयनायके शुभसंबन्धिनि दृश्यते मृदु ।
निगडेन निबध्यते नरः खलसंसर्गिणि ताड्यतेऽपि च ॥ २७ ॥

तनुत इत्यादि । वीतिहोत्रोऽग्निः । बध्यते इति बध्नातेः कर्मणि लट् ॥ भावाः 'तनुतोऽर्कदशो.'— इत्यादिना पठिताः तदीयनायकाः तत्स्वामिनः तेषां समाहारः

भावतदीयनायकं तस्मिन् । अथवा 'भावतदीश्वरद्विके' इति पाठ. । मृदुमन्दं यथा स्यात्तथा कारागारे रुध्यते । भावतदीयनायके खलसङ्गिणि सति निगडेन बन्धनशृङ्खलया निबध्यते नियच्छ्यते कशादिना ताड्यतेऽपि च । इति आरम्भतः सप्तविंशतिर्वैतालीयानि ॥ २६–२७ ॥

पश्चाद्रिपुभाग्ययोर्ग्रहसाम्ये बन्धः कोणयो रिपुजाययोः कीटयुग्मयोर्दाररिष्फयोश्च ॥१।३।४२॥ पञ्चमृक्षाणां तदीशानां च शुभसंबन्धे निरोधमात्रं पापसंबन्धाच्छृङ्खलाप्रहारादयः ॥१।३।४३॥

पश्चात् (=$\frac{१}{१}\frac{३}{२}$=१) लग्नात् रिपु (=$\frac{२}{१}\frac{१}{२}$=१२) भाग्ययो (=$\frac{१}{४}\frac{४}{२}$=२) द्वादशद्वितीययो॰, कोणयो पञ्चमनवमयोः, रिपु (=१२) आययो (=$\frac{१}{६}\frac{६}{२}$=६) द्वादशषष्ठयो, कीट (=११) युग्मयो (=$\frac{५}{१}\frac{३}{२}$=३) एकादशतृतीययो, दार (=$\frac{२}{८}\frac{८}{२}$=४) रिष्फयो॰ (=$\frac{१}{०}\frac{१}{२}$=१०) चतुर्दशमयोर्वा ग्रहसाम्ये एकश्चेद् एक, द्वौ चेद् द्वौ, त्रयश्चेद् त्रय इति रीत्या ग्रहसमताया घटमानाया बन्ध स्यात् ॥ एवमृक्षाणामिति स्पष्ट पद्यतो व्याख्यातं च ॥

नेत्रहानिमाह—

लग्नस्थानात्पञ्चमारूढवर्ती सिंहीसूनुर्भास्वता दृश्यमान. ।
नेत्रध्वंसी जायतेऽत्र प्रवीणैः शास्त्राकूतं किल्यतां भावयित्वा ॥२८॥

लग्नस्थानादिति । शास्त्राकूत जैमिनीयागमतात्पर्यम् । शालिनीवृत्तमेतत् ॥ २८ ॥

शुक्राद् गौणपदस्थो राहुः सूर्यदृष्टो नेत्रहा ॥१।३।४४॥

शुक्रात् (=$\frac{३}{१}\frac{५}{२}$=१) लग्नात् । ग्रहादिति केचित् । गौणस्य (=$\frac{५}{१}\frac{३}{२}$=५) पञ्चमस्य यत्पदमारूढसंज्ञ तत्स्थ सूर्येण दृष्टो राहुर्नेत्रहा स्यात् ॥

अथ तृतीयपादपदार्थानुपसंहरति—

इत्युक्तो विषधरदस्र (२८) संख्यपद्यैः
शास्त्रार्थो मुनिवचनानुरुद्ध एष ।
तेनाद्य प्रशमितसंशयावतार
छात्राणां मतिसरणि॰ परिष्कृता स्यात् ॥ २९ ॥

इति श्रीदुर्गाप्रसादद्विवेदरचिते जैमिनिपद्यामृते पदफलोद्देशो नाम तृतीय॰ प्रवाह
श्रीसद्गुरुचरणार्पणमस्तु । आदित पद्यसंख्या ८७+२८=११५। इत्युक्त इति सप्तम् ॥२९॥

इति श्रीजैमिनिपद्यामृतवृत्तौ मूलकन्दल्या तृतीय प्रवाह ॥

---

अथ चतुर्थः प्रवाहो विविच्यते—

तत्र पूर्वं मुनीश्वरप्रशंसनपुरःसरमुपपदफलनिरूपणं प्रतिजानीते—

सुनिपुणमिह भूतं वर्तमानं भविष्य-
त्करबदरसमानं ज्ञायते यत्प्रसादात् ।
तमखिलनिगमज्ञं कर्मविज्ञं प्रशंस-
न्नुपपदफलजातं वक्ति दुर्गाप्रसादः ॥ १ ॥ ( मालिनी )

सुनिपुणमिति । सुनिपुणमव्यभिचरितम् । भूतं वर्तमानं भविष्यदिति कालवशेन वस्तुनो वस्तुवशेन कालस्येत्यवस्थानयम् । ननु कालस्याखण्डत्वे कथमित्थं व्यवहार, औपाधिक इति गृहाण । उपाधिश्च दिगादिसम्बन्धेन नैकधा । 'अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि' । 'इत इदमिति यतस्तद्दिश्यं लिङ्गम्', इति भगवान् कणाद कालदिशोरनुमितौ लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्गं प्रमाणमाह । तत्रयमपि दिग्देशाभ्यां द्विधा भिद्यते । दिशापि भेदस्य निर्वाहे पलाशादिप्रतिपत्त्यर्थं देशसाहित्यमभ्युपेयम् । सन्निकर्ष इव विप्रकर्षेऽपि शास्त्रक्रियासंस्कृत ज्ञान न प्रतिबध्यते । तथा चाह भगवान् पतञ्जलि —'परिणामत्रयसंयमादतीतानागतज्ञानम्' । इत्यादि । एतेन फलव्यभिचार-मुत्प्रेक्षमाणानामायुष्मतामाक्षेपशङ्का. 'तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्य.', इति पूर्वपक्षविधयाऽक्षपादोक्तमङ्गिनोऽप्रामाण्यमिवोद्धर्तव्या प्रतिभानवद्भिः । शेषं स्पष्टम् । अत्र सर्वत्र छन्दोनाम तत्र तत्र मूले निर्दिष्टमेव ॥ १ ॥

उपपदात्फले वक्तव्ये किं तावदुपपदमिति जिज्ञासां पूरयति—

इह समासबलाद् धन (२) रिष्फयोः (१२)
पदमुशन्ति किलोपपदं विदः ।
विषमतासमतावशतस्तनो-
स्तदुपयोग इति ब्रुवतेऽपरे ॥ २ ॥ ( द्रुतविलम्बितम् )

इह समासबलादिति । 'पित्रनुचरात्', इति सौत्रपदस्य समासबलाद् षष्ठीतत्पुरुष-बहुव्रीह्योराश्रयणात् । तनोर्विषमतासमतावशत तदुपयोग, लग्ने विषमे द्वितीयस्य पदमुपपदं, लग्ने समे द्वादशस्य पदमुपपदम् । इति तयोर्द्वितीयद्वादशभावाभ्या सार्धं तयो पदयोरुपयोगव्यावारितार्थ्यमित्यपरे नवीना ब्रुवते, गणनावैचित्र्यबलेनोत्प्रेक्षन्त इत्यस्माभिरुदास्यते । विशेष सूत्रवृत्तौ ॥ २ ॥

उपपदं पदं पित्रनुचरात् ॥१।४।१॥

पित्रनुचरात् पदमुपपदं स्यादिति योजना । पिता (=६/१ २/२=१) लग्नम्, आयु पितृदिनेशाभ्यामित्यादौ तथा प्रयोगात् । अनु पश्चात् चरति गच्छतीत्यनुचर, पृष्ठचर इति यावत् । प्रश्नलक्षणादौ तथा प्रयोगात् । पितुरनुचर. पित्रनुचर तस्मात् पित्र-नुचरात् लग्नद्वादशात् यत्पद यावदीशाश्रयं पदमृक्षाणामित्यनेन तदुपपदम् । लग्नाद

द्वादशस्य यत्पदं तदुपपदसंज्ञं स्यादित्यर्थः । राशीनां संनिवेशानुसारेण कुण्डल्यां गणनाक्रमेण चोपनतस्य द्वादशस्य व्ययसंज्ञया व्यवहृतस्य लग्नपृष्ठवर्तित्वेनानुचराभिधानं सोपपत्तिकम् ॥ अत्रायं प्राचां व्याख्याविकल्पः—'यद्वा अनुचरतीत्यनुचरो लग्नाद् द्वितीयो भावः । तस्य लग्नोद्गमनानन्तरमेवोद्गमात् तथैव चक्रसंचारात् लग्नद्वितीयपदमुपपदमित्यर्थः । अत्र 'पितृ–अनुचरात्', इति पदच्छेदः । यदि 'पित्रनुचरात्', ($=\frac{२६•११}{१२}=९$) इत्येवाखण्डं तर्हि नवमानुचरात् अष्टमाद् दशमाद्वेति विज्ञेयम् । यद्वा 'पित्र्यानुचरात्' (=११) इति पाठे एकादशानुचराद् द्वादशादित्यर्थः सुगम एव । यद्वा 'पित्र्यानुचरात्', ($=\frac{२६०११}{१२}=७$) इति पश्चाक्षराद्वशेन सप्तमात्पदमुपपदम् । सप्तमं च जन्मलग्नादेरिति ज्ञेयम् । वस्तुतस्तु 'पितुरनुचरात्' इति पाठः समुचितः । यद्वा आरूढानां पदमुपपदमित्यर्थः । पितुरनुचरादनुरोधेनागतात्पदाद् यावदीशाश्रयमिति रीत्या पदानां सर्वेषां पदमानेयमिति यावत् । इति कृष्णानन्दसरस्वती । 'पित्र्यानुचरात्' इत्यत्रपञ्चात्सप्तसंख्यालाभं पन्थोऽप्यादृतवान् । इदमपि बोध्यम्—पितृलग्नमनुचर द्वितीयं यस्येति बहुव्रीहिणा द्वादशभावबोध इति नीलकण्ठः । पितुरनुचर इति तत्पुरुषेण धनभाव इति साम्प्रदायः । अत एव 'इह समासबलाद् धनरिष्फयोः पदमुशन्ति किलोपपदं विदः' इत्युक्तम् ॥

अथोपारूढकुण्डली ।

१२

११

१० श.

९ ग.

दारलग्नम्

८ सू. बु. के.

७

६ उपपदम्

मं.

स्त्रीसंबन्धीनि फलान्यष्टभिश्छन्दोभिराह—

उपपदभवनेऽथवा द्वितीये मलिनगृहे खलखेटसंश्रिते वा।
प्रशमितवनितोऽथवा परिव्राड् भवति न योगकृतौ खरांशसिंहौ ॥ ३ ॥
(पुष्पिताग्रा)

असिन्योगे सद्दृग्योगे। न प्रव्रज्या योषिन्नाशः ॥ ४ ॥ (कन्या)

तत्र धने वा नीचमुपेते। दारविनाशं शंसति सूत्रम् ॥ ५ ॥ (पङ्क्तिः)

उपपदमुच्चं श्रयदथवार्थः। घटयति पुंसां शशिवदना स्त्रीः ॥ ६ ॥
(शशिवदना)

यद्यत्र च तिष्ठेद्राशिर्मिथुनाख्यः। नूनं तनुमध्या योषा विदधाति ॥ ७ ॥
(तनुमध्या)

उपपदेऽथवा कुटुम्बके स्वपतिभाजि, वा तदीश्वरे।
स्वभवनस्थ उत्तरायुषि प्रलयमश्नुते मनोरमा ॥ ८ ॥ (मनोरमा)

उपपदधनपे निजतुङ्गगे मिलति हि गृहिणी जनमोज्ज्वला।
अधरभवनभाजि तु नीचजा विमलद्युतिदृशा हृदयंगमा ॥ ९ ॥ (उज्ज्वला)

उपपदधनमे सिंहीतनूजद्युमणिसुतयुते निन्दापुटेन।
धरणिदुहितृवत्संत्यज्यते वा विलयनमयते क्लेशाकुलास्त्री ॥ १० ॥ (पुटः)

उपपदभवन इत्यादि। प्रशमिता शान्ता मृता वनिता स्त्री यस्य स प्रशमितवनितः ॥ सतः शुभस्य दृग्योगो यस्मिन् स सद्दृग्योगः तस्मिन् ॥ तत्र उपपदे शंसति कथयति। सूत्रं कर्तृ ॥ उच्चं श्रयद् गच्छद् उपपदम्, अथवा अर्थो द्वितीयभाव उच्चं श्रयन्निति लिङ्गविपरिणामेनान्वयः ॥ अत्र चोपपदे द्वितीये वा। योषाः कर्म। विदधाति संपादयति ॥ स्वपतिभाजि स्वामियुक्ते वा तदीश्वरे उपपदकुटुम्बनाथे स्वभवनस्थे सति उत्तरायुषि वार्धके मनोरमा स्त्री प्रलयं नाशमश्नुते प्राप्नोति। मनोरमादिशब्दाः स्त्रीविशेषवाचका अपि छन्दोनामग्रहणदृष्ट्या प्रयुक्ताः ॥ उपपदधनपे उपपदस्वामिनि धनस्वामिनि चेत्यर्थः। अधरभवनं नीचराशिः ॥ सिंहीतनूजो राहुः। द्युमणिसुतः शनिः। निन्दापुटः सार्वजनीनोऽपवादः। धरणिसुता भगवती जनकनन्दिनी। तस्या अपि त्यागो लयश्च बभूवेति रामायणम्। अयते गच्छति। शेषं स्पष्टं सूत्रतो व्याख्यातं च ॥ ३—१० ॥

तत्र पापस्य पापयोगे प्रव्रज्या दारनाशो वा ॥१।४।२॥ नात्र रविः पापः ॥१।४।३॥ शुभदृग्योगाच्च ॥ १।४।४ ॥ नीचे दारनाशः ॥ १।४।५॥ उच्चे बहुदाराः ॥ १।४।६॥ युग्मे च ॥१।४।७॥ तत्र स्वामियुक्ते स्वर्क्षे वा तद्दे·

**तावुत्तरायुषि निर्दारः ॥ १।४।८॥ उच्चे तस्मिन्नुत्तमकुलाद्दारलाभः ॥१। ४।९॥ नीचे विपर्ययः ॥१।४।१०॥ शुभसंबन्धात्सुन्दरी ॥१।४।११॥ राहुश- निभ्यामपवादात्त्यागो नाशो वा ॥१।४।१२॥**

अधिकाराद् उपपदे; तत्र (=२६/१२=२) उपपदाद् द्वितीये वा, पापस्य पापग्रहस्य राशौ सति, पापयोगे सति वा प्रव्रज्या संन्यासः, दारनाशः स्त्रीनाशो वा स्यात् । **नील- कण्ठस्तु** 'उपपदे' इति पक्षं नाङ्गीकुरुते । 'आरूढात्तु धने पापस्वामिके पापसंयुते । संन्यासो वा कलत्रस्य नाशो भवति निश्चितम् ॥' इति केशवोऽपि । आरूढमुपपदम् ॥ अत्र द्वितीयसूत्रोक्तफले रविः पापत्वेन न गृह्यते । तेन तत्स्वामिकस्य सिंहस्यापपत्वं सिद्धम् ॥ 'शुभदृग्योगात्' इत्यत्रापि रवेरपापत्वं संपातायातम् ॥ नीचोच्चे परिभाषिते एव ॥ युग्मे (=५३/१२=३) उपपदे द्वितीये वा मिथुनराशौ सति बहुदारः स्यात् ॥ तत्र (=२६/१२=२) उपपदे द्वितीये वा स्वामियुक्ते सति; स्वर्क्षेऽन्यस्मिन् स्वराशौ, तद्धेतौ तच्छब्देन पूर्वपरामर्शाद् उपपदद्वितीयौ गृह्येते । नीलकण्ठमतेन द्वितीय एव गृह्यते । तयोः तस्य वा हेतुर्लिङ्गं स्वामीति तात्पर्यम् । तस्मिन् राशि । अन्यस्मिन् राशौ स्वामि- युक्ते वेति निष्कृष्टार्थः । शेषं स्पष्टम् । दारकारके शुक्रे शुक्रतुलयोरन्यतरस्मिन् स्थिते सति वा अनित्यदारकारके स्वराशौ स्थिते बोत्तरायुषि निर्दारः स्यादिति, तथा चोत्त- रेषु त्रयोदशसूत्रेषु दारकारकः संबध्यत इति च, विशेषः स्वामिमध्ये सन्ने इति सूत्र- द्वयी स्पष्टा । तत्र का नाम उत्तमता ? यत्प्रत्यक्षीकभूता अधमता; वा शुक्रशोणितसं- सर्गजनितोऽतिशय इति ब्रूमः । तथाच भगवान् मनुः—'वर्णापेतमविज्ञातं नरं कलुष- योनिजम् । आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत् ॥ अनार्यता निष्ठुरता क्रूरता निष्क्रियात्मता । पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥ पित्र्यं वा भजते शीलं मा- तुर्वोभयमेव वा । न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति ॥' इति ॥ एतद्वैपरीत्येन सुयोनिता व्याख्याता ॥ उपपदे द्वितीये वा शुभवर्गदृष्टियोगे सति सुन्दरी स्त्री स्यात् ॥ अपवादो 'लोकापवादाद् भयम्' इत्यादौ हेयत्वेनोक्तः ॥

पुनरपि स्त्रीसंबन्धीनि फलान्यष्टभिराह—

दैत्यपुरोधःशिखिनाथश्च रक्तप्रदरम् ।
यच्छत इन्दोस्तनयः केतुरथास्थिस्रवणम् ॥ ११ ॥ ( माणवकम् )
सहस्रांशुसैंहीतनूजन्ममन्दाः ।
कुरुद्वेषणाया इहास्थिज्वराय ॥ १२ ॥ ( सोमराजी )
अत्रावस्थितिमातौ राकेशात्मजकेतू ।
कुर्वाते नियमेन स्थूलाङ्गीं मदलेखाम् ॥१३॥ ( मदलेखा )
उपपदद्रविणगे धरणिभूर्बुधगृहे ।
कुजशनैश्चरयुते नसि रुजा मृगदृशः ॥१४॥ ( मगगतिः )

इह च सुरगुरुद्युमणिसुतयतिः ।
श्रवणरुजमथो दिशति नरहकाम् ॥ १५ ॥ ( मधुमती )
इह गतौ गुरुतमौ वितरतो रदरुजाम् ॥ १६ ॥ ( सती )
निघ्नं प्राप्तावुपपदधनगौ कुम्भे मीने सवितृसुततमौ ।
सीमन्तिन्याः पवनभवगदं दत्तो यद्वा गमनविकलताम् ॥ १७ ॥
( भ्रमरविलसितम् )

उपपदभे धनधाम्न्यथवा शुभखगदृष्टिसमागमने ।
कथितरुजा कलितावयवा न भवति जन्मयतां सुमुखी ॥ १८ ॥
( सुमुखी )

दैत्यपुरोध इत्यादि । अत्र उपपदे तद्द्वितीये वा । एवमग्रेऽपि । यच्छतः दत्तः 'दाण् दाने' इत्यस्य यच्छादेशे रूपम् ॥ सिंहीतनूजन्मा राहुः ॥ राकेशात्मजो बुधः । मदलेखा यौवनमदमन्थरामिति तात्पर्यम् ॥ नसि नासिकायां रुजा रोगः ॥ द्युमणिसुतः शनिः । नरहका 'नहरुवा' इति ख्यातो जङ्घागतो रोगः, प्रकरणविरोधान्न तु विपकन्येति । वितरतो दत्तः । तम इत्यदन्तः ॥ पवनभवगदं वातरोगम् । गमनविकलतां पङ्गुभावम् ॥ कथितरुजा कलितावयवा उक्तरोगाक्रान्ता । सुमुखी स्त्री ॥ शेषं स्पष्टं सूत्रतो व्याख्यातं च ॥ ११—१८ ॥

शुक्रकेतुभ्यां रक्तप्रदरः ॥ १।४।१३॥ अस्थिस्रावो बुधकेतुभ्याम् ॥ १।४।१४॥ शनिरविराहुभिरस्थिज्वरः ॥ १।४।१५ ॥ बुधकेतुभ्यां स्थौल्यम् ॥१।४।१६॥ बुधक्षेत्रे मन्दाराभ्यां नासिकारोगः ॥ १।४।१७ ॥ कुजक्षेत्रे च ॥१।४।१८॥ गुरुशनिभ्यां कर्णरोगो नरहका च ॥१।४।१९॥ गुरुराहुभ्यां दन्तरोगः ॥१।४।२०॥ शनिराहुभ्यां कन्यातुलयोः पङ्गुर्वातरोगो वा ॥१।४।२१॥ शुभदृग्योगान्न ॥१।४।२२॥

उपपदद्वितीययोः शुक्रकेतुभ्यां स्थिताभ्यां स्त्रिया रक्तप्रदराख्य आमयो भवति । एवमग्रेऽपि व्याख्येयम् । कन्यातुलयोः कन्या (=११) कुम्भः, तुला (=३६/६२=१२) मीनः ॥

पूर्वफलानामतिदेशं तत्र विशेषं च पद्भिराह—

उपपदगृहतः कलत्रालयात्तदधिगतखगात्तदीयांशकात् ।
विकसितधिषणाप्रभाभासुरैर्भणितफलमिदं विचार्यं धने ॥ १९ ॥ (प्रभा)
एतेभ्यो यदि धर्ममन्दिरे वर्तेरन्बुधसौरिमार्गवाः ।
कुर्वन्ति धनपत्यमंशुमत्स्वर्भान्वङ्गिरसो बहून्सुतान् ॥ २० ॥ (शुद्धविराद्)
यदामुतः शुभालयं चकोरबन्धुराश्रयेत् ।
तदैकमात्मसंभवं भणन्ति सूत्रवेदिनः ॥ २१ ॥ ( प्रमाणिका )

यद्येतेभ्यः शुभगृहमध्ये मिश्राः खेटाः समधिगताः स्युः।
पुत्रोत्पत्तिर्भवति विलम्बादत्र प्राज्ञैर्बलमपि वेद्यम् ॥ २२ ॥ ( मत्ता )
चेदितो नवमभवने तिष्ठतो रुधिररविजौ।
तर्हि पुंस इह कुतो दत्तकं प्रचुरकलहम् ॥ २३ ॥ ( हलमुखी )
ओजराशिभाजि पुण्यभावे (९) तेभ्य एव भूरिदारकाः स्युः।
युग्मऋक्षगे तु तत्र पुंसां जायते किलाल्पता प्रजानाम् ॥ २४ ॥
( मयूरसारिणी )

उपपदगृहत इत्यादि। उपपदगृहतः उपपदात् यः कलत्राख्यः सप्तमो भावः तस्मात्, तदधिगतो यो ग्रहः तस्मात्, तन्नवांशकाच्च। धने द्वितीये इदं भणितफलं कथितं फलजातं विकसितधिषणाप्रभाभासुरैः विकसिता उन्मीलिता या धिषणा बुद्धिः,तस्या या प्रभा नवनवोन्मेषः तद्भासुरैर्जातकविद्भिर्विचार्यम् ॥ एतेभ्य उक्तस्थानेभ्यः सकाशाद् । एवमग्रेऽप्येकोनविंशश्लोकोक्तानि स्थानानि बोध्यानि। अंशुमदसृग्मान्दिशिरसः रविराहुगुरवः ॥ चकोरबन्धुः चन्द्रमाः। मिथा अपत्यानपत्यकारकाः। अत्रेति संभवाभिप्रायेण ॥ दत्तकमिति। 'दद्यान्माता पिता वायं स पुत्रो दत्तको भवेत्' इति याज्ञवल्क्यः। दत्तकस्वीकारे दायादानां परस्परं विवादात् प्रचुरकलहमिति विशेषणम् ॥ प्रजानां संततीनाम् ॥ १९—२४ ॥

सप्तमांशग्रहेभ्यश्चैवम् ॥ १।४।२३ ॥ बुधशनिशुक्रेष्वनपत्यः ॥ १।४।२४॥ पुत्रेषु रविराहुगुरुभिर्बहुपुत्रः ॥ १।४।२५ ॥ चन्द्रेणैकपुत्रः ॥१।४।२६॥ मिश्रे विलम्बात्पुत्रः ॥१।४।२७ ॥ कुजशनिभ्यां दत्तपुत्रः ॥१।४।२८॥ ओजे बहुपुत्रः ॥१।४।२९॥ युग्मेऽल्पप्रजः ॥ १।४।३० ॥

उपपदाद् यः सप्तमो भावः, यश्च तद्भाववर्ती ग्रहो नवांशश्च तेभ्यः सकाशादेवं पूर्वोक्तानि फलानि समुन्नेयानि ॥ बुधेति। अग्रिमसूत्रात् 'पुत्रेषु' इति लभ्यते। 'पुत्रेषु' इति न पृथक्सूत्रं न वा बुधशनीति सूत्रानुयोगि तथैव पाठस्वारस्यात्। ततश्चायमर्थः—उपपदाद् यथा व्याख्यातसप्तमांशग्रहेभ्यः सकाशात् नवमभावेषु बुधशनिशुक्रेषु वर्तमानेष्वनपत्यो निःसंतानः स्यात् ॥ नीलकण्ठमते तु पुत्रपदस्यानुवर्तनाभावे विभक्तिविपरिणामेनान्वये च उपपदात्सप्तमांशग्रहेषु बुधशनिशुक्रेषु सत्सु अपत्यहीनो भवतीति वाक्यार्थः संपद्यते ॥ उपपदात्सप्तमांशग्रहेभ्यः पुत्रेषु (=१२२=९) नवमभावेषु रविराहुगुरुभिर्बहुपुत्रः स्यात्। नीलकण्ठस्तु पुत्रपदस्य यथाश्रुतमर्थमुपादाय यथासंभवं पञ्चमस्थानमिति व्याख्यातवान् ॥ मिश्रे विलम्बात्। अनुवर्तनात्पुत्र इति लब्धुं शक्यम् ॥ ओजयुग्मशब्दौ प्रसिद्धार्थावेव ॥

पूर्वेकलातिदेशं विशेषं च सप्तभिराह—

उदयभतत्पतितस्तत एवात्मजभवनाच्च तदीयनभोगात् ।
अथ च तदंशकतः प्रतिभावाल्लॅलितपदं निगदेत्फलजातम् ॥ २५ ॥
( ललितपदम् )

पदतश्च यदीन्नतनूजतमौ सहजर्क्षे (३) गतावनुजं निहतः ।
यदि लाभगृहाधिगतौ तु तदा कुरुतो निजपूर्वभवस्य मृतिम् ॥ २६ ॥
( तोटकम् )

चेत्तत एव विराजतिशुक्रो विक्रम (३) लाभ (११) निकेतनमध्ये ।
पृष्ठजपूर्वजगर्भविनाशं जन्मवतो विदधाति जनन्याः ॥ २७ ॥ (दोधकम्)

लग्नाद्रन्ध्रस्थाने ( ८ ) दैत्याचार्यावेक्षा ।
पूर्वेप्रस्यगर्भध्वंसायैवादिष्टा ॥ २८ ॥ ( विद्युल्लेखा )

भौमजीवचन्द्रबोधना उपारूढतद्गृहात्सदात्मआलयात् ।
तत्खगाल्लयाच्च सोत्थ ( ३ ) लाभ(११)गा
भ्रातृसंपदं वितन्वतेतराम् ॥ २९ ॥ ( श्येनिका )

चेत्कथितेभ्यः सहजनिकेते (३) लाभगृहे (११)वा कुजशनिदृष्टे ।
भ्रातृविनाशो भवति यथास्वं शिष्यत आत्मार्यमसुतदृष्टे ॥ ३० ॥
( मौक्तिकमाला )

यस्य शिखीभणितेभ्यो विक्रम ( ३ ) लाभ ( ११ ) विहारी ।
तस्य यथाक्रममुक्ताश्चित्रपदा हि भगिन्यः ॥३१॥ ( चित्रपदा )

उदयभेत्यादि । उदयभतत्पतितः जन्मभतत्स्वामिभ्यामित्यर्थः । तत एव आत्मजभवनात्तदीयनभोगाद् ग्रहाच्च । अथ तदंशकाच्च । प्रतिभावात् सूक्ष्मसूक्ष्मतरार्थग्राही ललितानि मनोरञ्जकानि पदानि यस्मिन्कर्मणि तद्यथा स्यात्तथा फलजातं निगदेत् कथयेत् ॥ पदतश्च पूर्वोक्तेभ्यः स्थानेभ्यः । निहतः मारयतः । निजात्पूर्वं भव उत्पत्तिर्यस्य स निजपूर्वभवो ज्येष्ठः तस्य ॥ ततः पूर्वोक्तेभ्यः ॥ दैत्याचार्यस्यावेक्षा दृष्टिः । आदिष्टा कथिता ॥ बोधनो बुधः । उपारूढतद्भवात् उपपदतदीशात्; तदात्मआलयात्, उपपदतत्स्वामिनोः पञ्चमात्; तथा पञ्चमग्रहनवांशात् ॥ अर्यमसुतः शनिः तेन दृष्टे आत्मा स्वमात्रं शिष्यते ॥ उक्ताः कनिष्ठा ज्येष्ठाः ॥ २५–३१ ॥

गृहक्रमात्कुक्षितदीशपञ्चमांशग्रहेभ्यश्चैवम् ॥१।४।३१॥ भ्रातृभ्यां शनिराहुभ्यां भ्रातृनाशः ॥१।४।३२॥ शुक्रेणव्यवहितगर्भनाशः ॥१।४।३३॥ पितृभावे शुक्रदृष्टेऽपि ॥१।४।३४॥ कुजगुरुचन्द्रबुधैर्बहुभ्रातरः ॥१।४।३५॥ शन्याराभ्यां दृष्टे यथास्वं भ्रातृनाशः ॥ १।४।३६ ॥ शनिना स्वमात्रशेषश्च ॥ १।४।३७ ॥ केतौ भगिनीबाहुल्यम् ॥१।४।३८॥

गृहक्रमात् जन्मलग्नराशिक्रमात् कुत्सितदीशपञ्चमांशग्रहेभ्यश्चैवं पूर्वोक्तानि फलानि विचार्याणि। 'गृहक्रमात्' इति विशेषोपादानाद् जन्मलग्नवद्राशी अपि गृह्येते। अग्रेऽप्युपपदं गृह्यत एव। कुत्सिशब्देन जन्मलग्नराशिः, शेषं पद्यतो व्याख्यातम्। उक्तेभ्यः भ्रातृभ्यां तृतीयैकादशस्थाभ्यां शनिराहुभ्यां भ्रात्रोः कनिष्ठज्येष्ठयोर्नाशः स्यात्। 'कर्मादिर्भ्रातुः ॥२।३।२१' 'व्ययादिर्ज्येष्ठस्य ॥२।३।२३॥' इति वक्ष्यमाणसूत्राभ्यामवगतोऽयमाशयो यथासंबन्धमुत्तरत्राप्युपतिष्ठत एव॥ उक्तेभ्यः तृतीयैकादशस्थेन शुक्रेण व्यवहितयोरागमनान्तरितयोः कनिष्ठज्येष्ठयोर्गर्भयोर्नाशः॥ पिता ($=\frac{6}{1}\frac{1}{2}=1$) लग्नम्, ततः भावे ($=\frac{4}{1}\frac{4}{2}=8$) अष्टमे शुक्रदृष्टे अपिना व्यवहितगर्भनाशः॥ कुलेति सूत्रं स्पष्टं पद्यतो व्याख्यातं च॥ उक्तेभ्यः तृतीयैकादशे च स्थाने शन्याराभ्यां दृष्टे यथासं भ्रातृस्थानमनतिक्रम्य कनिष्ठस्य ज्येष्ठस्य, उभयत्र दृष्टे उभयोश्च नाशः॥ उक्तेभ्यः तृतीयैकादशयोः शनिदृष्टौ समाश्लेषः स्यात्। ज्येष्ठकनिष्ठनाशो भवतीत्यर्थः। उक्तेभ्यः तृतीयैकादशयोः केतौ सति यथासं भगिनीबाहुल्यम्॥

फलान्तराणि त्रिभिराह—

**उपपदयमिताधीशात् (७) यदि धनभवने (२) राहुः।**
**प्रथयति नियतं दंष्ट्रां विकलितवचनं केतुः॥२३॥ (भुजगशिशुसृता)**

**तिष्ठन्नुपपद—स्त्रीशात् (७) धन (२) गृहे।**
**सौरी रचयते रूपेण विकृतम्॥ २३॥ (वसुमती)**

**स्वांशादेव फलितैः पुंसां गौरमुखवर्णाः।**
**होराशास्त्रपरिपाट्या विश्वासार्थमुपदेश्याः॥ २४॥ (हंसरुतम्)**

उपपदेत्यादि। तथा च वृद्धः—'सप्तमेशाद् द्वितीयस्थे राहौ मूकः शठे स्थिते। अदन्तोऽधिकदन्तो वा दंष्ट्रायुक्तोऽथवा भवेत्॥ विष्ठमिति स्पष्टम्॥ स्वांशाद् आत्मकारकांशाद्। एतदुक्तं भवति—'लग्ननवांशपतुल्यतनुः स्याद् वीर्ययुतग्रहतुल्यतनुर्वा। चन्द्रसमेतनवांशपवर्णः' इति होराशास्त्रोक्तरीत्या आत्मकारकगतो यो नवांशस्तस्य यः स्वामी तत्तुल्यतनुस्तत्सदृशः प्राणी स्यात्। अथवा कारकांशकुण्डल्या सर्वग्रहेभ्यो यो बली तत्तुल्यतनुः स्यात्। अथवा तत्र चन्द्राधिगतो यो नवांशस्तत्स्वामितुल्यवर्णः स्यात्। तुल्यतापदको वर्ण आकारश्च। 'रक्तश्यामो भास्करो, गौर इन्दुर्नात्युच्चाङ्गो, रक्तगौरश्च वक्रः। दूर्वाश्यामो ज्ञो, गुरुर्गौरगात्रः, श्यामः शुक्रो, भास्करिः कृष्णदेहः॥' इति 'मधुपिङ्गलदृक्'—इत्यादि च। अथवांश इत्युपलक्षणम्। तेन 'जीवेन्दुभूमिपुत्राणां द्रेष्काणे गौरवर्णता। कृष्णत्वं मन्दद्रेष्काणे शेषाणां चैव मिश्रता॥' इत्यादि संगृह्यते। अत्रेदमपि न विस्मर्तव्यम्—निरक्षासन्नेषु रामेश्वरादिविषयेषु तरणिकिरणानां लम्बप्रायनिपातेनोष्णताधिक्यात्कलम्बोरादिषु तिर्यङ्निपातेन शैत्याधिक्याच्च तत्र

तत्र जातानां परिणामवशेनापाततः कृष्णगौरादिव्यत्यासेऽपि सूक्ष्मानुसंधानैकबोध्यो वर्णभेदप्रयुक्तो विशेषोऽवतिष्ठत एव । अतएव सांप्रदायिकाः—'वर्णस्तु जातिकुलदेशानुमानतो ज्ञेयः,' । अन्यत्रापि—'इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ॥ तथापि न तदाख्यातुं सरस्वत्यापि शक्यते ॥' इति ॥ ३२—३४ ॥

**लाभेशाद्भाग्यभे राहौ दंष्ट्रावान् ॥ १।४।३९ ॥ केतौ स्तब्धवाक् ॥१।४।४०॥ मन्दे कुरूपः ॥१।४।४१॥ स्वांशवशाद्गौरनीलपीतादिवर्णाः ॥१।४।४२॥**

उपपदादिति प्रकरणाल्लभ्यते । लाभः (=४३/१२=७) तत्सप्तमः तदीशात् भाग्यं (=२४/१२=२) द्वितीयम्, तच्च तद्भं च तस्मिन् भाग्यभे ॥ केताविति सूत्रद्वयी स्पष्टा ॥ स्वांश आत्मकारकनवांशः तद्वशात्तदवलम्बनात् । मेषस्य वर्णो रक्तः, वृश्चिकस्य पीतः तत्स्वामी रक्तगौरः वृषस्य वर्णः श्वेत', तुलायाः कृष्ण इति तत्स्वामी श्याम ईषद्गौर इति तद्व्याख्यातारः । मिथुनस्य वर्णः शुकतनुनिभः, कन्यायाः चित्र इति तत्स्वामी दूर्वाश्यामः । कर्कस्य वर्णः पाटल इति तत्स्वामी गौरः । सिंहस्य वर्णो धूम्रपाण्डुरिति तत्स्वामी रक्तश्यामः । धनुषो वर्णः पिङ्गलः, मीनस्य स्वच्छ इति तत्स्वामी गौरः । मकरस्य वर्ण. कर्बुरः, कुम्भस्य बभ्रुरिति तत्स्वामी कृष्ण इति । वर्णस्य कैवल्ये' मिश्रणे चापि तरतमभावस्य सत्त्वादिन्दुगुर्वोर्गौरवर्णो नैकविधाविति पदार्थपरीक्षकैर्विभावनीयम् । एतेन गौरनीलपीतादिवर्णा इति सूत्रशेषमपि व्याख्यातम् ॥

देवताभक्ति-परजातादिफलानि चतुर्भिराह—

भ्रातृकारकादमुत्र देवभक्तिमुद्दिशन्ति ।
अस्य तुङ्गनीचपुण्यपापतावलम्बनेन ॥ ३५ ॥ ( समानिका )

आत्मांशको यदि च केवलपापखेट-
संबन्धभाग्भवति तर्हि परेण जातः ।
योगेऽत्र कारकखगस्य न पापभावं
संभावयन्ति फलितागमबोधवृद्धाः ॥३६॥ ( मधुमाधवी )

योगो यदि चायं पातङ्गितमाभ्यां
जायेत तदानीं प्राकट्यमदभ्रम् ।
चेदन्यनभोगैर्गुप्त्या कुलमान-
श्रेणीमणिमाला न म्लानिमुपयाति ॥ ३७ ॥ ( मणिमाला )

अपवादमात्रमेव स्वांशे शुभखेटवर्गसहिते तु ।
आर्याणामवतंसः कुलमुख्यो विग्रहे तत्र ॥ ३८ ॥ ( आर्या )

भ्रातृकारकादित्यादि । अस्य भ्रातृकारकस्य ॥ संभावयन्ति गणयन्ति ॥ कुलमानश्रेण्येव निर्मलत्वान्मणिमाला । लोकदृष्ट्येदम् । वस्तुतस्तु वर्णसंकरप्रयुक्तो दोषः संता-

नचरीतद्वारेण यथाकालं प्रादुर्भविष्यत्येव ॥ तत्र स्वांशे द्विग्रहे कुलमुख्यः । आर्याणा-मवतंस इति संभवाभिप्रायेण छन्दोनामग्रहणार्थम् । एवमन्यत्रापि ॥ ३५—३८ ॥

**अमात्यानुचराद्देवताभक्तिः ॥१।४।४३॥ स्वांशे केवलपापसंबन्धे परजातः ॥ १।४।४४ ॥ नात्र पापात् ॥ १।४।४५ ॥ शनिराहुभ्यां प्रसिद्धिः ॥१।४।४६॥ गोपनमन्येभ्यः ॥१।४।४७॥ शुभवर्गेऽपवादमात्रम् ॥ १।४।४८ ॥ द्विग्रहे कुलमुख्यः ॥ १।४।४९ ॥**

अमात्यसानुचरो भ्रातृकारकः तस्माद् देवता नैगमिकी आगमिकी च द्वयमपि निराकारा साकारा च । आकारत्वे तस्या अनेकत्वप्रतिपादकं सूत्रम्—'विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ।' इति ।

'त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन् ।' इत्यादि । तस्यां भक्तिः सा च कारकस्य शुभग्रहत्वे दृढा, नीचगत्वे शिथिला, पुण्यत्वे सौम्यदेवतायां, पापत्वे च क्रूरदेवतायां चेति पदतः स्पष्टम् ॥ स्वांशे आत्मकारकांशे ॥ अत्र आत्मकारकस्य पापत्वे परजातो न स्यात् ॥ आत्मकारकांशे वर्गरूपेण शनिराहुभ्यां शनिराहुभ्यां परजातत्वप्रसिद्धिः ॥ अत्रैव अन्येभ्यः पापेभ्यो गोपनं परजातत्वगुप्तिः । आत्मकारकांशे पापग्रहोऽप्ययोगघटितेऽपि शुभवर्गसंबन्धे सति परजातत्वस्यापवादमात्रम् ॥ आत्मकारकांशे द्विग्रहयोगे सति कुलमुख्यः स्यात् ॥

इदानीं प्रकरणस्य गौरवदोषं परिहरति—

**लाघवेन घटनेऽपि पदानां गौरवेण घटितोऽत्र निबन्धः ।**
**जन्मपत्रकरणे विशदोक्तिः स्वागता हि फललेखनसिद्ध्यै ॥ ३९ ॥**
(स्वागता)

लाघवेनेति । स्पष्टम् ॥ ३९ ॥

अथ चतुर्थपादपदार्थानुपसंहरति—

**इत्युक्तो द्विविचरराम(३९)संख्यपद्यैः**
**शास्त्रार्थो मुनिवचनानुरुद्ध एव ।**
**तेनाथ प्रशमितसंशयावतारं**
**छात्राणां मतिसरसी सरस्वती स्यात् ॥४०॥** ( प्रहर्षिणी )

**इति श्रीदुर्गाप्रसादद्विवेदरचिते जैमिनिपद्यामृते प्रतिवृत्तमिश्रवृत्तक-उपपदफलोद्देशो नाम चतुर्थः प्रवाहः श्रीमद्गुरुचरणार्पणमस्तु । आदितः पद्यसंख्या ११५+३९=१५४**

इत्युक्त इति । मतिरेव सरसी सा प्रसरणगुणयोगात् सरस्वती नदी, तद्विशेषो वा स्यात् ॥ ४० ॥

इति श्रीजैमिनिपद्यामृतवृत्तौ मूलकन्दल्यां चतुर्थः प्रवाहः पूर्वार्धं चेति शिवम् ॥

---

अथ पञ्चमः प्रवाहः । तत्र मुनीन्द्रनमनपूर्वकमायुर्मीमांसां प्रतिजानानो गणितप्रक्रियामेकोनविंशत्या प्रपञ्चयति—

नामं नामं जगन्मान्यं जैमिनिं मुनिकुञ्जरम् ।
आयुर्दायो यथाशास्त्रविवेचनमनूद्यते ॥ १ ॥
चरे लग्नाष्टमेशौ चेद्वा स्थिरद्विस्वभावयोः ।
त्र्यार्का गजाशा अङ्काङ्का अब्दा दीर्घायुषस्त्रिधा ॥ २ ॥
तावेव चेद् द्विस्वभावे वा चरस्थिरयोः खलु ।
देभा द्युगाश्चतुःषष्टिर्हायना मध्यमायुषः ॥ ३ ॥
स्थिरे लग्नरन्ध्रेशौ वा चरद्विस्वभावयोः ।
खाब्धयोऽङ्गाग्नयो दन्ताः समा हीनायुषो मताः ॥ ४ ॥
एवमेवाङ्गचन्द्राभ्यां त्रेधायुरवधारयेत् ।
अथवा शनिचन्द्राभ्यामिति संन्यासिनोऽवदन् ॥ ५ ॥
इत्थमेव हि जन्माङ्गहोराङ्गाभ्यां परामृशेत् ।
परामर्शविसंवादे संवादद्वितयागतम् ॥ ६ ॥
चेत्प्रकारत्रयेणापि भिन्नमायुरवाप्यते ।
तदाङ्गहोरालग्नाभ्यां तदानयनमिष्यते ॥ ७ ॥
लग्नजायागते चन्द्रे चन्द्रलग्नत एव तत् ।
यद्वा शनिशशाङ्काभ्यामिति संन्यासिनो मतम् ॥ ८ ॥
दीर्घदीर्घं(१२०)मध्यदीर्घं(१०८)हीनदीर्घं(९६)मिति त्रिधा ।
दीर्घमध्यं(८०)मध्यमध्यं(७२)हीनमध्य(६४)मिति त्रिधा ॥ ९ ॥
दीर्घहीनं(४०)मध्यहीनं(३६)हीनहीन(३२)मिति त्रिधा ।
आयुषां क्रममास्थाय स्फुटीकरणमाचरेत् ॥ १० ॥
लभ्यते त्रिंशता भागैरन्त्योपान्त्यादि चेत्तदा ।
योगकारकसंख्यासलग्नेशादिगतैः किमु ॥ ११ ॥
फलेनोनोऽनुपातीयो मध्यराशिः प्रजायते ।
प्रमाणमायुषः स्पष्टं यदि हीनायुरागतम् ॥ १२ ॥
मध्यायुषि तु तन्मध्ये योजयेदायुरागतम् ।
दीर्घायुषस्तु सद्भावे स्वोर्ध्वखण्डे क्षिपेदिदम् ॥ १३ ॥
विधित्रयद्वयैकैश्चेद् दीर्घमायुर्भवेत्तदा ।
बृहन्मध्याल्पकाः खण्डा हीनं चेद्व्यत्ययान्मताः ॥ १४ ॥
यद्यत्र योगकर्तारिस्तदा कक्ष्याक्षयो भवेत् ।
दीर्घे मध्यं मध्यमे तु हीनमायुरिति स्थितिः ॥ १५ ॥

सुश्लोकशतके तु—

'जन्मलग्नेश्वरः खेटो भानोरधिसुहृत्सुहृत् ।
वा चेद्दीर्घायुरथवा समो मध्यायुरुच्यते ॥
अल्पायुरधिशत्रुश्चेच्छत्रुर्वा, रविरत्र चेत् ।
भवेल्लग्नेश्वरस्तर्हि जन्मराशीश्वरो, यदा ॥
तयोः स एव नाथश्चेत्तदा यद्गृहगो रविः ।
तद्वशादिह निर्णयमायुर्विद्वद्भिरेव हि ॥ इति कान्यकुब्जाः ।

कृष्णानन्दसरस्वतीस्वामिमन्ये वृद्धवाक्यान्तराण्यपि—

'धर्मे मोक्षे चिरायुष्यं, धर्मे कामे च मध्यमम् ।
धर्मे धने च स्वल्पायु, धर्मे धर्मे गतायुषः ॥
लग्नलग्नेशतद्राशिनाथभानां त्रिकोणके ।
अल्पमध्यचिरायुष्यं रूपवर्षप्रमाणतः ॥' इति ।

धर्मः (=$\frac{५}{१}\frac{९}{२}$=११) एकादशः । मोक्षः (=$\frac{६}{६}\frac{५}{२}$=५) पञ्चमः । कामः ($\frac{५}{१}\frac{१}{२}$=१) तृतीयः । धनम् (=९) नवमः । 'आयुः पितृदिनेशाभ्याम् ॥२।१।१॥' इति सूत्रानुसारेणात्र धर्ममोक्षादिद्वन्द्वे लग्नेशाष्टमेशयोरवस्थानमूह्यम् ॥ योऽयमष्टमेशादिरिह निर्याणकारकः स चेल्लग्नत्रिकोणे तर्हि रूपवर्षप्रमाणतोऽल्पायुः स्यात् । एतदुक्तं भवति—लग्ने द्वादश, पञ्चमे चतुर्विंशतिः, नवमे षट्त्रिंशत् । इति यथोत्तरं द्वादशवर्षाण्युपचीयन्ते । विंशत्युत्तरशतसंख्याकपूर्णायुरङ्गीकारे तु त्रयोदश वर्षाणि चत्वारो मासा उपचीयन्त इति विशेषः । एवं लग्नेशाश्रितराशौ तत्पञ्चमे तन्नवमे च, तथा लग्नेशाश्रितराशीशाश्रितराशौ तत्पञ्चमे तन्नवमे चाष्टमेशादिनिर्याणकारकावस्थानेन यथोत्तरमुपचितानि त्रिधा मध्यमायूंषि त्रिधा चिरायूंषि च स्युः ।

| स्थानानि । | आयूंषि । |
| --- | --- |
| १ | १२।१३,४ |
| ५ | २४।२६,८ |
| ९ | ३६।४०।० |
| १ | ४८।५३,४ |
| ५ | ६०।६६,८ |
| ९ | ७२।८०,० |
| १ | ८४।९३,४ |
| ५ | ९६।१०६,८ |
| ९ | १०८।१२०,० |

अथात्र नैसर्गिकेनायुरानयने प्रागुक्तानां वृहन्मध्याल्पखण्डानामेवमुपयोग उपदिष्टः—

यदि 'आयुः पितृदिनेशाभ्याम्' 'एवं मन्दचन्द्राभ्याम्' 'पितृकालतश्च' इति प्रकारत्रयेणापि दीर्घायुरवाप्यते; तर्हि 'खाग्नयः' इति दीर्घहीनः खण्डो ग्राह्यः। यदि च प्रकारद्वयेन दीर्घायुस्तदा 'अङ्गाग्नयः' इति मध्यहीनः खण्डो ग्राह्यः। यदि चैकेन प्रकारेण दीर्घायुस्तदा 'दन्ताः' इति हीनहीनः खण्डो ग्राह्यः। एवं प्रकारत्रयेण हीनायुषि हीनहीनः, प्रकारद्वयेन मध्यहीनः, प्रकारैकेण दीर्घहीन इति हीनायुरानयने व्यत्ययादेन एव खण्डा ग्राह्याः। 'आयुः—' इति प्रथमेन प्रकारेण मध्यमायुषो निश्चये बृहत्खण्डो ग्राह्यः। 'एवम्—' इति द्वितीयेन मध्यमः। 'पितृकालतः—' इति तृतीयेनाल्पक इत्येके। प्रकारत्रयेणैकेन वा मध्यायुष्यागते मध्यमं खण्डम्। प्रकारद्वयेन मध्यायुषि एकेन दीर्घायुषि बृहत्खण्डम्, प्रकारद्वयेन मध्यायुषि एकेन हीनायुषि स्वल्पकं खण्डं ग्राह्यमिति मम प्रतिभातीत्यत्रुनातीयखण्डविवेकः। 'चरे लग्नाष्टमेशौ चेद्' इत्यादि त्रिधा विभक्तस्य योगत्रयस्य दर्शनार्थं चक्रम्—

| | | | | | |
|---|---|---|---|---|---|
| दीर्घायुः। चरे लग्नेशः। चरेऽष्टमेशः। | दीर्घायुः। स्थिरे लग्नेशः। द्विस्वभावेऽष्टमेशः। | दीर्घायुः। द्विस्वभावे लग्नेशः। स्थिरेऽष्टमेशः। | दीर्घदीर्घम् १२० | मध्यदीर्घम् १०८ | हीनदीर्घम् ९६ |
| मध्यायुः। चरे लग्नेशः। स्थिरेऽष्टमेशः। | मध्यायुः। स्थिरेलग्नेशः। चरेऽष्टमेशः। | मध्यायुः। द्विस्वभावे लग्नेशः। द्विस्वभावेऽष्टमेशः। | दीर्घमध्यम् ८० | मध्यमध्यं ७२ | हीनमध्यम् ६४ |
| हीनायुः। चरे लग्नेशः। द्विस्वभावेऽष्टमेशः। | हीनायुः। स्थिरेलग्नेशः स्थिरेऽष्टमेशः। | हीनायुः। द्विस्वभावेलग्नेशः। चरेऽष्टमेशः। | दीर्घहीनम् ४० | मध्यहीनम् ३६ | हीनहीनम् ३२ |

एवं त्रिविधेष्वप्यायुषि प्रकारत्रयेणाप्येकाकारेष्ववगतेषु विसंवादाभावात्प्रामाण्यम्। एकप्रकारेण भिन्नतायां प्रकारद्वयसंवादात्प्रामाण्यम्। प्रकारत्रयेणापि भिन्नतायां 'विसंवादे पितृकालतः' इति सूत्रमुपतिष्ठते। एतदेव 'एवमेवाङ्गचन्द्राभ्याम्', इत्यादिनोपनिबद्धम्।

अत्रेदमपि बोध्यम्—सौम्रमन्दपदमुपादाय 'अथवा शनिचन्द्राभ्याम्' इति। 'यद्वा शनिशशाङ्काभ्याम्' इति च यो व्याख्याभेदस्तस्यैवमेकवाक्यता। तथा च मैत्रेयं प्रति भगवान्पराशरः—

'लग्नेशादष्टमेशाद्येको योगः कथितो द्विज।
होरालग्नाभ्यां द्वितीयं योगमेवं विचिन्तयेत्॥

तृतीयं शनिचन्द्राभ्यां चिन्तनीयं द्विजोत्तम ।
लग्ने चन्द्रः सप्तमे वा चिन्तयेल्लग्नचन्द्रतः ॥' इति ।

एतेन 'आयुः पितृदिनेशाभ्याम् ॥२।१।१॥' 'पितृकालतश्च ॥२।१।५॥' 'एवं मन्दचन्द्राभ्याम् ॥२।१।६॥' इत्येवं क्रमेण योगत्रयी व्याख्याता भवति; तथा 'एवं मन्दचन्द्राभ्याम्', इति सूत्रे मन्दशब्देन शनिर्ग्राह्यो यदि 'पितृलाभगे चन्द्रे चन्द्रमन्दाभ्याम् ॥२।१।९॥' इति सूत्रस्य विषयो न स्यात्। यदि पुनः पितृगो लाभगो वा चन्द्रस्तर्हि मन्दशब्देन लग्नं ग्राह्यमिति । वस्तुतस्तु सूत्रेषु तत्र तत्र मन्दशब्देन शनिग्रहणाद् अत्रापि शनिर्ग्राह्य इति प्रतिभाति । इदमेव समीचीनमित्यस्माकं नाग्रहः, यथा यस्मै रोचेत तथा तेन विधीयताम् ।

अथानुपाते भावाभावस्थानमित्थमुपदिष्टं वृद्धैः—

'पूर्णमादौ हानिरन्तेऽनुपातो मध्यतो भवेत् ।
राशिद्वयस्य योगार्धं वर्षाणां स्पष्टमुच्यते ।
एवं द्विकानां संचिन्त्यं त्रयाणां सूत्रवर्त्मना' इति ।

एतदुक्तं भवति—यदि योगकर्ता राश्यादौ स्यात्तर्हि दीर्घायुरादिकमेण दीर्घहीनं मध्यहीनं हीनहीनमिति चत्वारिंशत्षट्त्रिंशद् द्वात्रिंशत्खण्डाः पूर्णा एव । यदि राश्यन्ते तदा खण्डानामभाव एव । मध्ये त्वनुपातेन खण्डानि ज्ञायन्ते । तत्रेत्थं लाघवम्—यावन्तो योगकारका ग्रहास्तेषां योगो योगकारकग्रहसंख्यया भाज्यस्ततो लब्ध्यानुपातः यदि त्रिंशता भागैरन्त्योपान्त्यादि द्वात्रिंशत्षट्त्रिंशच्चत्वारिंशद्रूपं खण्डं लभ्यते तदा योगकारकसंख्यासमभेशादिगतभागैः किं फलं तत्तत्खण्डसंबन्ध्यायुःखण्डम् । तच्च यथागतद्वात्रिंशदादिखण्डाच्छोध्यं शेषं स्पष्टायुः स्यात्, यदल्पायुषः सद्भावः । यदि मध्यायुस्तर्हि फलं यथागतद्वात्रिंशदादिखण्डे योज्यं स्पष्टायुः । यदि दीर्घायुस्तर्हि फलं चतुःषष्ट्यादिखोर्ध्वखण्डे योज्यं स्पष्टायुः स्यादिति गणितप्रक्रिया ॥

यच्च योगकृत्सौरिरित्यादिना शनियोगे कक्ष्याह्रासो गुरुयोगे कक्ष्यावृद्धिरुक्ता । तत्र का नाम कक्ष्या ? दीर्घमध्यहीनायूरूपा सौत्री 'खाभ्ययोऽद्धामयो दन्ताः' इति वृद्धोपदेशविभक्तेति गृहाण ।।एतदुक्तं भवति—दीर्घं चेन्मध्यं मध्यं चेदल्पमल्पं चेदमायुः । तथा चत्वारिंशच्चेत्षट्त्रिंशत्, षट्त्रिंशच्चेत् द्वात्रिंशत्, द्वात्रिंशच्चेदधस्तात् । इति कक्ष्याह्रासः । कक्ष्यावृद्धिस्तु—अनायुश्चेद् अल्पायुः, अल्पायुश्चेन्मध्यायुः, मध्यायुश्चेद्दीर्घायुः, दीर्घायुश्चेत्तत ऊर्ध्वमिति । तथा अधस्ताच्चेद् द्वात्रिंशत्, द्वात्रिंशच्चेद् षट्त्रिंशत्, षट्त्रिंशच्चेत् चत्वारिंशत्, चत्वारिंशच्चेद् ऊर्ध्वम् । दीर्घायुषि प्राप्ते खेमा इत्यादयः पठितहायनाः सिद्धा एव सन्ति तत्राप्रिमायुःखण्डज्ञानार्थमनुपातः । तत्रापि यदि राश्यादौ योगकर्तृग्रहावस्थानं तदा पूर्णखण्डस्य तदूर्ध्वखण्डे मध्यायुषि योजिते खार्कादयः परमायुःखण्डा उत्पद्यन्ते । यदि पुनाराश्यन्तेऽवस्थानं तदा पूर्णखण्डस्य शून्यत्वात्खेमादयो मध्यमायुःखण्डा एवावशिष्यन्ते । त एवायूंषि । एवं मध्यायुषि प्राप्ते तु खाभ्यादयो हायनाः सिद्धा एव । केवलमग्रिमार्थमनुपातः । तत्रापि राश्यादौ ग्रहावस्थाने पूर्ण

खण्डस्य योजनालक्षाब्धिप्रभृतयः खण्डा द्विगुणतया परिणममानाः सेमादयो मध्यमायुःखण्डा भवन्ति । राश्यन्ते तु केवला एव तिष्ठेयुः । राशिमध्ये पुनरपचीयेरन्निति किं पिष्टस्य पेषणेन । मैत्रेयं प्रति भगवान्पराशरोक्तिरपि—

'अत्यल्पायुर्भवेदल्पमत्पान्मध्यं प्रजायते ।
मध्यमाज्जायते दीर्घं कक्ष्यावृद्धेश्च लक्षणम् ॥'

इयतो वैपरीत्येन कक्ष्याह्रासोऽपि—

'आयुर्दाये समापन्ने कक्ष्यात्रयमिहोच्यते ।
दीर्घमध्याल्परूपं चेत्तत्प्रमाणं वदाम्यहम् ।
पदत्रिंशाब्देन कक्ष्यैका तस्या हानिः प्रजायते ॥' इति ।
'अत्यल्पायुर्विजानीयाद्बाल्ये च निधनं भवेत् ।' इति च ।

अन्ये शनावित्यादि । अत्र विपरीतशब्दस्य अर्थे । शेषं सूत्रान्तःपातीति ॥१-१९॥

**आयुः पितृदिनेशाभ्याम् ॥२।१।१॥ प्रथमयोरुत्तरयोर्वा दीर्घम् ॥२।१।२॥ प्रथमद्वितीययोरन्त्ययोर्वा मध्यम् ॥२।१।३॥ मध्ययोराद्यन्तयोर्वा हीनम् ॥२।१।४॥ एवं मन्दचन्द्राभ्याम् ॥२।१।५॥ पितृकालतश्च ॥२।१।६॥ संवादात्प्रामाण्यम् ॥२।१।७॥ विसंवादे पितृकालतः ॥२।१।८॥ पितृलाभगे चन्द्रे चन्द्रमन्दाभ्याम् ॥२।१।९॥ शनौ योगहेतौ कक्ष्याह्रासः ॥२।१।१०॥ विपरीतमित्यन्ये ॥२।१।११॥ न स्वर्क्षतुङ्गगे सौरे ॥२।१।१२॥ केवलपापदृग्योगिनि च ॥२।१।१३॥ पितृलाभगे गुरौ केवलशुभदृग्योगिनि च कक्ष्यावृद्धिः ॥२।१।१४॥**

पिता (=६१=१) लग्नम्, दिनम् (=८) अष्टमः, तयोः पितृदिनेशयोरीशौ स्वामिनौ ताभ्यामायुर्विचार्यम् ॥ प्रथमयोश्चरराश्योः उत्तरयोः स्थिरद्विस्वभावराश्योर्वा मध्ये स्थितयोर्लग्नेशाष्टमेशयोर्दीर्घमायुः स्यात् । अनेकस्मिन्नेव चरादिराशौ लग्नेशाष्टमेशयोरवस्थानत्वे एकस्यैव ग्रहस्य लग्नेशाष्टमेशत्वे वा योगभङ्गो न जायत इति व्याख्यातारः ॥ प्रथमद्वितीययोः चरस्थिरराश्योः अन्त्ययोर्द्विस्वभावराश्योर्वा मध्ये स्थितयोर्लग्नेशाष्टमेशयोर्मध्यमायुः स्यात् ॥ मध्ययोः स्थिरराश्योः आद्यन्तयोश्चरद्विस्वभावराश्योर्वा स्थितयोर्लग्नेशाष्टमेशयोर्हीनायुः स्यात् ॥ एवं यथा लग्नेशाष्टमेशाभ्यां दीर्घमध्यहीनायूंषि विचारितानि, तथा मन्दचन्द्राभ्यामपि विचार्याणीति योजना । मन्दः (=८५=१) लग्नम्, चन्द्रः शशी ताभ्यामिति नीलकण्ठादयः । मन्दः शनिः, चन्द्रः शशीति कृष्णानन्दसरस्वतीस्वामिनः ॥ चकार एवमर्थे । एवं पिता (=६१=१) लग्नम्, कालो होरालग्नम्, ताभ्यामप्यायूंषि विचार्याणीत्यर्थः । होरालग्नसाधनं प्रथमप्रवाहे द्रष्टव्यम् । तत्साधयवमेव साम्यमिति स्वाम्यादीनां बहूनां मतम् ॥ संवादात् त्रिविधेष्वप्यायुरानयनप्रकारेषु काभ्यां चिदपि प्रकाराभ्यां यदायुरागच्छति तदेव ग्राह्यम् ॥ विसंवादे त्रिविधेनापि प्रकारेण भिन्ने आयुषि पितृकालतो जन्मलग्नहोरालग्नाभ्यां यदायुरागच्छति तदेव ग्राह्यम् ॥ पिता (=६१=१) लग्नम्, यामः (=५१=७) सप्तमः,

तद्रे चन्द्रे चन्द्रः शशी, मन्दः (=५/१२=१) लग्नं ताभ्यां यदायुरायाति तदेव ग्राह्यम्, अन्यथा शनिचन्द्राभ्यामिति पञ्चमसूत्रोपात्तमन्दशब्दार्थनिर्णयः ॥ शनौ योगहेतौ योगकर्तरि सति कक्ष्याह्रासः स्यात् । अत्र दीर्घमध्यहीनायुर्योगानुरोधेन निर्दिष्टाः खाब्ध्ययोऽङ्गाग्नयो दन्ताः शरदः कक्ष्याशब्देन ह्रासवृद्धिप्रसङ्गे गृह्यन्त- इति सर्वे । कक्ष्या (=११) एकादश शरद इत्येकदेशिनः ॥ अन्ये आचार्याः शनौ योगहेतौ सति विपरीतमाचक्षते । तत्र न ह्रासवृद्धी इति नीलकण्ठः । वृद्धिरिति स्वाम्यादयः ॥ स्वर्क्षगे तुङ्गगे सौरे शनौ सति कक्ष्याह्रासो न स्यात् । स्वशत्रुराशिगे स्वनीचराशिगे ॥ कक्ष्याह्रासः स्यादित्यर्थात्सिद्धम् ॥ तथा केवलपापदृग्योगिनि च शनौ कक्ष्याह्रासो न स्यात् । शुभपापदृग्योगिनि तु कक्ष्याह्रासः स्यादित्यर्थात्सिद्धम् ॥ अयमभिप्रायः—'शनौ योगहेतौ कक्ष्याह्रासः ॥ २।१।१०॥' इति सामान्येनाभिधानम् । 'विपरीतमित्यन्ये ॥२।१।११॥' इत्यन्येषामाचार्याणां मतप्रदर्शनम् । 'न स्वर्क्षतुङ्गगे सौरे—केवलपापदृग्योगिनि च ॥२।१।१२-१३॥ इति सूत्राभ्यामाचार्यस्य स्वाभिमतविशेषकथनम् । तत्रान्याचार्यमतमेवानुभवसिद्धमिति नीलकण्ठकेशवौ ॥ पिता (=६/१२=१) लग्नम्, लाभः (=४६/१२=७) सप्तमः, तद्रे तथा केवलशुभदृग्योगिनि च गुरौ कक्ष्यावृद्धिः स्यात् । नेतरत्र कक्ष्यावृद्धिरित्यार्थात्सिद्धम् ॥

अथायुरुदाहरणम्—

तत्र प्राग्दर्शितग्रहस्थित्या लग्नेशो बुधः स्थिरगः, अष्टमेशः शनिर्द्विस्वभावगः, तेन 'प्रथमयोरुत्तरयोर्वा दीर्घम् ॥२।१।२॥' इति सूत्रेण दीर्घायुः । अथैकवाक्यतापक्षे 'पितृलाभगे चन्द्रे चन्द्रमन्दाभ्याम् ॥२।१।९॥' इति विशेषशास्त्रस्य विषयाभावे 'एवं मन्दचन्द्राभ्याम् ॥२।१।५॥' इति सूत्रेण शनिर्द्विस्वभावगः, चन्द्रः स्थिरगः, तेनापि दीर्घायुः । एवं 'पितृकालतश्च ॥२।१।६॥' इति सूत्रेण लग्नं होरालग्नं च द्विस्वभावगौ, तेन 'प्रथमद्वितीययोरन्त्ययोर्वा मध्यम् ॥२।१।३॥' इति सूत्रेण मध्यायुः । अत्र प्रकारद्वयसंवादाद्दीर्घायुरेव ग्राह्यं न तु मध्यायुः । अत्र योगकर्तारो ग्रहा एते—

रा. ॰ ′ ″

बुधः=७।२७।१४।४८

शनिः=८।२६।२४।१८

शनिः=८।२६।२४।१८

चन्द्रः=१।१५।०।१४

राशीन्विहाय सर्वेषामंशादीनां योगः योगकर्तृसंख्यया भक्तः योगकर्तृसंख्या=४) ९५।३।२८(२३।४५।५४।३०

मध्यखण्डेन ३६ गुणितः ३६×(२३।४५।५४।३०)=८५५।३२।४२ त्रिंशता ३० भक्तः (८५५। ३२।४२)÷३०

अत्र लाघवार्थमंशादि द्वादशघ्नं दिनादिकमिति लब्धं वर्षादि २८।६।६।१२।२४ एतदनुपातीयमध्यराशेः षट्त्रिंशन्मितात्पातितं जातम् ७।५।२३।२७।३६ एतस्मोर्ध्वखण्डे ५२ निक्षिप्तं जातं स्पष्टमायुः ७१।५।२३।२७।२६

अथवा योगकर्तृणां भोग्यांशादीनां योगो योगकर्तृसंख्यया भक्तः भोग्यांशाः—

बुधस्य=२।४५।१२

शनेः=३।३५।४२

शनेः=३।२५।४२

चन्द्रस्य=१४।५९।४६

योगकर्तृसंख्या

४) २४।५६।२२ (६।१४।५।३०

मध्यखण्डेन ३६ गुणितः

३६×(६।१४।५।३०)=२२४।२७।१८

अत्रापि लाघवार्थमंशादि द्वादशघ्नं दिनादिकमिति जातं वर्षादि ७।५।२३।२७।३६ एतत्स्वोर्ध्वखण्डे निक्षिप्तं जातं स्पष्टमायुर्वर्षादि ७६।५।२३।२७।३६ ॥

अथ विज्ञातस्यायुषः परिसमाप्तौ निधनमाहोस्वित्तन्मध्यसमयेऽपीति प्रतिपादनार्थं द्वारबाह्यसञ्ज्ञाकथनपूर्वकं 'दशाश्रयो द्वारं—' इति श्लोकाभ्यां निधनयोगं 'शुभदृग्योग' इत्यर्धेन तदपवादं तथा 'लग्नाष्टमेशे—' इत्युत्तरार्धेनार्यया च विशेषमाह—

दशाश्रयो द्वारमिति बाह्यस्तावतिथस्ततः।
एतौ राशी क्रमेणोक्तौ पाकभोगाभिधावपि ॥ २० ॥
मालिन्ये द्वारबाह्यस्य द्वारद्वारेशयोरपि।
तन्नवांशदशामध्ये प्राणिनो निधनं भवेत् ॥ २१ ॥
शुभदृग्योगसत्ता तु तत्र नायाद्येन्मृतिम्।
लग्नाष्टमेशे तुङ्गस्थे नवांश उपचीयते ॥ २२ ॥
तत्रापि पदेशदशापाके शमनः पराक्रमते।
पदनवकांशदशायां तनुमृतिपतिकोणयोर्वापि ॥ २३ ॥

दशाश्रयो द्वारम् ॥२।४।२॥ततस्तावतिथं बाह्यम् ॥२।४।३॥ मलिने द्वारबाह्ये नवांशे निधनं द्वारद्वारेशयोश्च मालिन्ये ॥२।१।१५॥ शुभदृग्योगान्न ॥२।१।१६॥ योगेशे तुङ्गे नवांशवृद्धिः ॥२।१।१७॥ तत्रापि पदेशदशान्ते पदनवांशदशायां पितृदिनेशत्रिकोणे वा ॥२।१।१८॥

'पञ्चमे पदक्रमाल्प्राग्—२।३।३०॥' इत्यादिसूत्रोपदिष्टगणनानुसारेण यस्मिन्समये यस्य कस्यचिद्राशेर्या चरादिका दशा वर्तते,' तस्या आश्रयो राशिर्द्वारं द्वारपदवाच्यम्। यस्य राशेर्वर्तमाना दशा स राशिरित्यर्थः ॥ ततः तस्माद् दशाश्रयभूताद्राशेस्तावतिथः तावत्सङ्ख्याकोऽमिमो राशिर्बाह्यं बाह्यपदवाच्यम्। प्रथमदशाराशितो यावत्संख्याकः पाकापरपर्यायो द्वारराशिर्जायते तस्मात्तावत्सङ्ख्याक एव भोगापर-

पर्यायो बाह्यराशिरिति तत्त्वम् । प्रथमदशायां द्वारं बाह्यं चैक एव राशिः । द्वितीयदशायां द्वितीयो द्वारं तृतीयो बाह्यम् । तृतीयदशायां तृतीयो द्वारं पञ्चमो बाह्यराशिः । एवमग्रे चतुर्थपञ्चमषष्ठा द्वारराशयः सप्तमनवमैकादशास्तद्बाह्यराशयः ॥ द्वारं च बाह्यं चेति समाहारद्वन्द्वः । द्वारबाह्ये मलिने स्वयं पापे पापयुक्ते पापदृष्टे च सति द्वारबाह्ययोर्नवांशे अन्तर्दशाराशौ निधनं स्यात् । एवं द्वारद्वारेशयोर्बाह्यबाह्येशयोरपि मालिन्ये निधनम् ॥ तत्र शुभदृग्योगाद् द्वारबाह्यतदीशाश्रयनवांशे निधनं न स्यात् रोगः (=$\frac{३}{१}\frac{२}{२}$=८) अष्टमः तदीशे तुङ्गे नवांशवृद्धिः । एतेन तदग्रिममलिनराश्यन्तर्दशायां निधनमुक्तं स्यात् ॥ तत्रापि नवांशवृद्धिसत्त्वेऽपि पदं लग्नारूढं तस्य य ईशः स्वामी तस्याश्रयीभूतो यो राशिः तस्य या महादशा तस्या अन्ते पर्यवसाने, वा पदनवांशदशायां लग्नारूढराश्यन्तर्दशायां, वा पितृदिने (=$\frac{६}{१}\frac{१}{२}$=१,८) लग्नाष्टमौ तयोर्यावीशौ ताभ्यां त्रिकोणे पञ्चमनवमान्यतरराश्यन्तर्दशायां विदशायां वा निधनं स्यात् ॥

अथ प्रकारान्तरेण दीर्घमध्याल्पायुर्योगं सापवादं शार्दूलविक्रीडितेन, बलनिर्णयं चित्रपदया चाह—

लग्नात्सप्तमतश्च यौ मृतिपती मध्ये तयोर्यो बली
तस्मिन्केन्द्रगते बृहत्पणफरस्थानस्थिते मध्यमम् ।
स्यादापोक्लिमगेऽल्पमेवमपि तद्विद्यान्निजात्कारका-
दङ्गाद्धर्मगते तु कारकखगे तद्वैपरीत्यं भवेत् ॥ २४ ॥
जैमिनिदर्शनमाद्यत्पाठ्यपूर्णमनीषाः ।
अत्र हि राशित एव प्राणविमर्शमुशन्ति ॥ २५ ॥

जैमिनिदर्शनेऽसुक्तिस्तु 'शातिप्रचारितमिव लिखितमिव मती निषिक्तमिव हृदये । शास्त्रं यस्य सभगणं नादेशा निष्फलास्तस्य ॥' इति मिहिरोपदेशाभिप्रायेण ॥

**पितृलाभरोगेशप्राणिनि कण्टकादिस्थे स्वतश्चैवं त्रिधा ॥२।१।१९॥ योगात्समे स्वस्मिन्विपरीतम् ॥२।१।२०॥ राशितः प्राणः ॥२।१।२१॥**

पिता (=$\frac{६}{१}\frac{१}{१}$=१) लग्नम् , लाभः (=$\frac{४}{१}\frac{३}{२}$=७) सप्तमः ताभ्यां सकाशाद् रोगे (=$\frac{३}{१}\frac{२}{२}$=८) अष्टमौ तयोर्यावीशौ स्वामिनौ तयोर्मध्ये यः प्राणी बलवान् तस्मिन् कण्टकादिस्थे लग्नादिकेन्द्रपणफरापोक्लिमस्थे त्रिधा योगः स्यात् । तस्मिँल्लग्नादिकेन्द्रस्थे दीर्घायुः, पणफरस्थे मध्यायुः, आपोक्लिमस्थेऽल्पायुरित्यर्थः । एवं स्वतश्च कारकादपि योगत्रयं ज्ञेयम् । एतदुक्तं भवति—आत्मकारकात्तत्सप्तमाच्च यावष्टमेशौ तयोर्मध्ये यो बली तस्मिन्कारकात्केन्द्रगे दीर्घम् , पणफरगे मध्यम् , आपोक्लिमगेऽल्पम् ॥ योगात् (=$\frac{३}{१}\frac{१}{२}$=७) जन्मलग्नसप्तमात्समे (=$\frac{५}{१}\frac{५}{२}$=९) नवमे स्वस्मिन्नात्मकारके विपरीतम् । केन्द्रपणफरापोक्लिमस्थे हीनमध्यदीर्घाण्यायूंषि स्युरित्यर्थः ॥ राशितः प्राण इति । 'कारकयोगः प्रथमो भानाम् ॥२।३।६॥' इत्यादिना वक्ष्यमाणं बलमत्र ग्राह्यम् । न पुनरंशाधिक्यरूपमिति तात्पर्यम् ॥

अत्र विशेषं दीर्घादियोगे कक्ष्याह्रासं चेन्द्रवज्रयाह—

लग्नात्कलत्रादपि रन्ध्रनाथे स्वेनान्विते वैक्यमितेऽपि मध्यम् ।
पापान्तरस्थे तनुदारगेहे कक्ष्याक्षयो वा सखले त्रिकोणे ॥२६॥

लग्नादिति । स्वेनात्मकारकेण अन्विते युक्ते, वा ऐक्यमेकभावमिते प्राप्ते सति । शेषं स्पष्टम् ॥ २६ ॥

अथ कारकेऽपि कक्ष्याह्रासं सविशेषं मन्दाक्रान्तायाः पूर्वार्धेनाभिधायोत्तरार्धेनापवादं सविशेषमाह—

स्वस्मिन्नेवं फलमुपदिशन्त्यत्र पापेऽधरस्थे
यद्वाशुभे खलखगयुते कक्ष्यकाह्रासमाहुः ।
कक्ष्यावृद्धिं ध्रुवमितरथा वागधीशेऽपि चैवं
सौम्यासौम्यप्रमुखकलना यत्नतो योजनीया ॥ २७ ॥

स्वस्मिन्नेवमिति । सौम्यासौम्यप्रमुखकलना शुभाशुभोच्चनीचविवेक इत्यर्थः ॥ २७ ॥

अत्रापि विशेषमनुष्टुभाह—

पूर्णेन्दुशुक्रयोरेकराशिवृद्धिर्युतौ भवेत् ।
शनैश्चरप्रसक्तौ तु वैपरीत्यं प्रजायते ॥ २८ ॥

**रोगेशयोः स्वतः कारकयोगे वा मध्यम् ॥२।१।२२॥ पितृलाभयोः पापमध्यत्वे कोणे पापयोगे वा कक्ष्याह्रासः ॥२।१।२३॥ स्वस्मिन्नप्येवम् ॥२।१।२४॥ तस्मिन्पापे नीचेऽतुङ्गेऽशुभसंयुक्ते च ॥२।१।२५॥ अन्यदन्यथा ॥२।१।२६॥ गुरौ च ॥२।१।२७॥ पूर्णेन्दुशुक्रयोरेकराशिवृद्धिः ॥२।१।२८॥ शनौ विपरीतम् ॥२।१।२९॥**

लग्नात्सप्तमाच्च रोगो (=$\overset{२}{र}\overset{३}{ग}$=८) अष्टमराशी तदीशयोः, स्वतः कारकेणैक्ये सति योगे वा सति मध्यायुः स्यात् । अत्र कृष्णानन्दसरस्वती 'अयं योगः स्वतन्त्रो वा दीर्घस्य मध्यतापादको वा अल्पस्य मध्यतापादको वेति विवेचनीयम्' इत्याहुस्म । नीलकण्ठस्तु 'पितृलाभ—' इत्यादिना निर्णीतं दीर्घायुरपि मध्यायुरिति । एवमन्येऽन्यदिति ॥ पिता (=$\overset{१}{प}\overset{६}{त}$=१) लग्नम्, लाभः (=$\overset{३}{ल}\overset{४}{भ}$=७) सप्तमः, एतयोः पापमध्यत्वे पापान्तर्वर्तित्वे सति, वा कोणे त्रिकोणे पापयोगे सति कक्ष्याह्रासः स्यात् ॥ स्वस्मिन्कारकेऽप्येवं विचार्यम् । एतदुक्तं भवति—कारकतत्सप्तमराश्योः पापमध्यत्वे, वा तयोस्त्रिकोणे पापयोगे कक्ष्याह्रासः स्यात् ॥ एतस्मिन्कारके पापे नीचे सति, अथवा अतुङ्गेऽनुच्चराशिगते अशुभसंयुक्ते सति कक्ष्याह्रासः स्यात् ॥ अन्यदन्यथा । अयमभिप्रायः—लग्नसप्तमयोः कारकसप्तमयोर्वा शुभमध्यत्वे, वा तेषां त्रिकोणेषु शुभयोगे सति, तथात्मकारके शुभे नीचातिरिक्ते, वा तुङ्गे शुभसंयुक्ते सति कक्ष्यावृद्धिः स्यात् ॥ गुरौ च । एवं गुरावपि पापमध्यवर्तिनि तत्त्रिकोणे वा पापयोगिनि कक्ष्याह्रासः । शुभमध्यगते तत्त्रिकोणे वा शुभगते तु कक्ष्यावृद्धिः । नीचे पापयुक्ते कक्ष्याह्रासः । इतरथा तु कक्ष्यावृद्धिः ॥

शुभग्रहयोगप्रसङ्गे पूर्णेन्दुशुक्रयोर्योगे एकराशिवृद्धिरेव स्यान्न पुनः कक्ष्यावृद्धिः ॥ पापग्रहयोगप्रसङ्गे शनौ योगकर्तरि विपरीतमेकराशिह्रास एव स्यान्न पुनः कक्ष्याह्रासः । अत्र चन्द्रशुक्रशनीनां प्राधान्येन योगकर्तृत्वे ग्रहान्तरेषु योगकरेष्वप्येकराशेर्वृद्धिह्रासौ वा स्यान्न तु कक्ष्यायाः, इति साम्यादयः ॥

अथ स्थिरदशाब्दाँस्तदारम्भस्थानं च द्रुतविलम्बितेनाह—

तुरग(७)कुञ्जर(८)खेचर(९)संमिताः स्थिरदशाशरदः क्रमतो मताः ।
इयमुदाह्रियते द्रुहिणाह्वयद्युचरसंश्रितराशिमुखी किल ॥ २९ ॥

तुरगेति स्पष्टार्थम् ॥ २९ ॥

शशिनन्दपावकाः क्रमादब्दाः स्थिरदशायाम् ॥२।३।३॥ ब्रह्मादिरेषा ॥२।३।४॥

शशी (= ५५/१२ = ७) सप्त । नन्दाः (= ८०/१२ = ८) अष्टौ । पावकाः (= १४१/१२ = ९) नव । अब्दाः क्रमात्, मेषे सप्त, वृषे अष्टौ, मिथुने नव । पुनः कर्के सप्त, सिंहे अष्टौ, कन्याया नव । एवमग्रेऽपि उक्तलक्षणो ब्रह्मा, तदादिरियं स्थिरदशा ॥ अब्दान्तराणि चरदशावद् ॥

अथ ब्रह्मग्रहं शार्दूलविक्रीडितेन लक्षयति—

मध्ये मूर्तिकलत्रयोर्दिविचरो जायेत यो वीर्यवाँ-
स्तस्मादत्र सपत्न(६)कुञ्जर(८)रवि(१२)स्थानेश्वरप्राणवान् ।
चेल्लग्नास्तगतर्क्षयोर्बलवतः पृष्ठावलम्बी भव-
न्नोजस्थोऽपि स एष तावदपिभिर्ब्रह्माख्यया ख्याप्यते ॥ ३० ॥

मध्य इति । सप्तमभोग्याङ्कभुक्तावधिको भागो लग्नस्य पृष्ठभाग इति व्यवह्रियते ॥

अथ शार्दूलविक्रीडितेन ब्रह्मणो निर्णये विशेषं प्रपञ्चयति—

पातङ्गावथवा तमोदिविसदि ब्रह्मत्वमृच्छत्यपि
ब्रह्मातः खलु षष्ठ एव गदितश्चेद्ब्रह्मणोऽनेकता ।
ब्रह्मांशाभ्यधिको विधुंतुदयुतो तूक्ताद्भवेदन्यथा
ब्रह्मा स्यादपमोऽथवा मृतिगतोऽपि स्याद्विवादे बली ॥ ३१ ॥

पातङ्गाविति । ऋच्छति गच्छतीति सप्तमी 'ब्रह्मा स्यादपम—' इति प्रकारान्तरेण ब्रह्मणः प्रतिपादनम् ॥ ३१ ॥

प्रभुभाववैरीशप्राणी पितृलाभप्राण्यनुचरो विषमस्थो ब्रह्मा ॥२।१।४९॥ ब्रह्मणि शनौ पातयोर्वा ततः ॥२।१।५०॥ बहूनां योगे स्वजातीयः ॥२।१।५१॥ राहुयोगे विपरीतम् ॥२।१।५२॥ ब्रह्मा स्वभावेशो भावस्थः ॥२।१।५३॥ विवादे बली ॥२।१।५४॥

प्रभुः (= ४२/१२ = ६) षष्ठः, भावः (= ४४/१२ = ८) अष्टमः, वैरी (= २४/१२ = १२) द्वादशः, एतेषां य ईशाः स्वामिनः तत्र यः प्राणी बलवान् सः । पिता (= ६१/१२ = १) लग्नम्, लाभः (= ४३/१२ = ७) सप्तमः, तत्र यः प्राणी बलवान् राशिः तस्य अनुचरः, पृष्ठवर्ती सन् विषमस्थः मेषमिथुनादिविषमराशिगतो जायते, स ब्रह्माख्यग्रह इति परिभाष्यते ॥

शनौ ब्रह्मणि सति, पातयोर्वा ब्रह्मणोः सतोः, शनिराहुकेतुषु ब्रह्मलक्षणाक्रान्तेषु राहुकेतुभ्यः ततः (=$\frac{6}{12}$=६) षष्ठो ग्रहो ब्रह्मा ॥ बहूनां ग्रहाणां योगे ब्रह्मयोगे प्राप्ते स्वजातीयः स्वस्य आत्मकारकस्य जातीयः अधिकांशो ब्रह्मा ॥ बहुषु ब्रह्मणो लक्षणे अन्विष्यमाणे राहुयोगे सति विपरीतं पूर्वस्माद् वैपरीत्येन न्यूनांशो ब्रह्मा ॥ स्वाद् आत्मकारकाद् यो भावः (=$\frac{4}{12}$=८) अष्टमः तस्येशः तथा भावस्थः अष्टमस्थो ब्रह्मा । विवादे 'स्वभावेशो भावस्थः' इति पूर्वसूत्रेण द्वयोर्ब्रह्मत्वे सति यो बली स ब्रह्मा ॥

अथ ब्रह्मग्रहदशां स्रग्विण्याह—

**ओजभे ब्रह्मखेटाश्रयर्क्षात्क्रमाद् युग्मराशौ तु तत्सप्तमाद् व्युत्क्रमात् ।**
**स्याद् दशा ब्रह्मसंज्ञात्र वर्षप्रमा स्वस्वभात् षष्ठऋक्षाधिनाथावधिः ॥३२॥**

ओजभे इति सष्ठम् । ब्रह्मग्रहर्क्षाद् आरम्भणीयत्वाद् ब्रह्माख्येयं दशा ॥ ३२ ॥

**ब्रह्मादिः पुरुषे समा दासान्ताः ॥२।३।२६॥ स्थानव्यतिकरः ॥२।३।२७॥**

पुरुषे विषमे जन्मलग्ने सति ब्रह्मादिर्ब्रह्मग्रहाश्रितराश्यादिः क्रमेण दशा प्रवर्तनीया । तत्र समा दशाब्दा दासान्ताः स्वराशेः षष्ठराशिस्वामिपर्यन्ता ग्राह्याः । दासः (=$\frac{86}{12}$=६) षष्ठो राशिः । समे जन्मलग्ने तु स्थानव्यतिकरः । स्थानं (=७) सप्तमराशिस्तस्य व्यतिकरः संबन्धः । ब्रह्मग्रहाश्रितराशितः सप्तमराश्यादिव्युत्क्रमेण दशा प्रवर्तनीयेति तात्पर्यम् ॥

अथ स्थिरदशोदाहरणम् ।

'ब्रह्मा स्वभावेशो भावस्थः ॥२।१।५३॥' इति सूत्रेणात्मकारकात्सूर्यादष्टमेशो बुधो ब्रह्मा भवति, तदाश्रितराशिर्वृश्चिकः स च समः तेन वृश्चिकाद्युत्क्रमेणार्थात्पूर्वं वृश्चिकस्य ततस्तुलाकन्यादीनां दशा प्रवर्तनीयेति । दृष्टान्तराणि चरदशावत् ॥

स्थिरदशाचक्रम् ।

| सू.बु.के. | | मं.गु. | शु. | | ल. | चं.रा. | | | | शु. | श. | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| वृश्चि. | तु. | क. | सिं. | कर्क. | मि. | वृ. | मे. | मी. | कुं. | म. | ध. | |
| ८ | ७ | ९ | ८ | ७ | ९ | ८ | ७ | ९ | ८ | ७ | ९ | |
| १९२९ | १९३७ | १९४४ | १९५२ | १९६१ | १९६८ | १९७७ | १९८५ | १९९२ | २००१ | २००९ | २०१६ (२०२५) | |
| ७<br>२९<br>५१<br>२४ | | | | | | | | | | | ७<br>२९<br>५१<br>२४ | |

अथ ब्रह्मदशोदाहरणम् ।

लग्नं मिथुनराशिः स च विषमस्तेन ब्रह्मग्रहाश्रितवृश्चिकराशेः सकाशात्क्रमेण दशा प्रवर्तनीया । पूर्वं वृश्चिकस्य ततो धनुषस्ततो मकरादीनामिति । अत्र दशाब्दाः स्वस्वराशेः षष्ठराशिस्वामिपर्यन्ता ग्राह्याः । यथा वृश्चिकात्षष्ठराशिस्वामी भौम एकादशे तिष्ठतीति तदवधिगणनया दशाब्दा वृश्चिकराशेः सिद्धाः । एवमेव धनुषः सकाशात्षष्ठराशिस्वामी शुक्रो द्वितीय इति तदवधिगणनया वर्षं लब्धम् । एवमेव मकरादीनामपि वर्षाण्यानीतानि ।

ब्रह्मदशाचक्रम् ।

| स. बु. के. | श. | शु. | | | | चं. रा. | बु. | | गु. | मं. गु. | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| वृश्चि. | ध. | म. | कुं. | मी. | मे. | वृष. | मि. | कर्क. | सिं. | क. | तु. |
| १० | १ | १० | ३ | ८ | ७ | ८ | ३ | १ | ४ | ८ | १० |
| १९२९ | १९३९ | १९४० | १९५० | १९५३ | १९६१ | १९६८ | १९७६ | १९७९ | १९८० | १९८४ | १९९२ (२००२) |
| ७ २९ ५१ २४ | | | | | | | | | | | ७ २९ ५१ २४ |

अथ योगार्धदशामार्ययाह—

भवति चरस्थिरदशयोरर्धं योगार्धसंज्ञितात्र दशा ।
लग्नात्सप्तमाणवतो विषमसमत्वे क्रमोत्क्रमतः ॥ ३३ ॥

जगतस्थुषोरर्धं योगार्धं ॥ २।४।१९ ॥ स्थूलादर्शंचैषम्याश्रयमेतत् ॥२।४।२०॥

योगार्धे योगार्धदशायां जगतस्थुषोः प्रतिराशिसमागतचरदशाब्दस्थिरदशाब्दयोरर्धं योगार्धं योगार्धा दशा स्यात् । अन्वर्थेयं संज्ञा । एतद्योगार्धं स्थूलं (=१७/१२=१) लग्नादेः सप्तमम्, एतयोर्मध्ये बलवतः प्रवर्तनीयम् ॥

अथ योगार्धदशोदाहरणम् ।

लग्नसप्तमयोर्मध्ये सप्तमराशिर्बलवाँस्तेन सप्तमराशितः क्रमेण दशा प्रवर्तनीया । वर्षाण्यत्र प्रतिराशिचरदशाब्दस्थिरदशाब्दयोर्योगार्धतुल्यानि ।

योगार्धदशाचक्रम् ।

| श. | शु. | | | | चं.रा. | ल. | | वृ. | मं.गु. | | सू. बु.के. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ध. | म. | कु. | मी. | मे. | वृ. | सि. | कर्क. | सिं. | क. | तु. | वृश्चि. |
| ८ ६ | ४ ० | ८ ६ | ८ ० | ६ ० | ८ ० | ७ ० | ४ ६ | ८ ६ | ९ ६ | ५ ० | ९ ० |
| १९२९ | १९३८ | १९४३ | १९५० | १९५८ | १९६४ | १९७२ | १९७९ | १९८४ | १९९३ | २००२ | २००७ (२०१६) |
| ७ २९ ५१ २४ | १ २९ ५१ २४ | १ २९ ५१ २४ | ७ २९ ५१ २४ | ७ २९ ५१ २४ | ७ २९ ५१ २४ | ७ २९ ५१ २४ | ७ २९ ५१ २४ | १ २९ ५१ २४ | ७ २९ ५१ २४ | १ २९ ५१ २४ | १ २९ ५१ २४ |

अथ सकलायुर्योगापवादत्वेन निधनयोगविशेषं स्थिरदशामालम्ब्य शिखरिण्याह—

यथाखण्डं देही निधनमुपयाति स्थिरदशा-
निवेशे तत्रर्क्षव्यतिकरविशेषोऽयमुदितः ।
भवेद् यः पापान्तो मलिनगृहकोणान्तरगतो-
ऽथवा क्रूराक्रान्तो व्ययनिधनयोर्मृत्युकृदसौ ॥ ३४ ॥

यथाखण्डं देहीति । ऋक्षव्यतिकरविशेषो राशिसंबन्धविशेष इत्यर्थः ॥ ३४ ॥

अत्रापि विशेषमिन्द्रवज्रयाह—

रिष्फाष्टमेशौ कृशचन्द्रशुक्रमार्गेक्षितौ तत्र मृतिं विधत्तः ।
तत्रापि चाद्यर्क्षमृतीशदृष्टनवांशपाके निधनं स्मरन्ति ॥ ३५ ॥

रिष्फाष्टमेशाविति । तत्र द्वादशाष्टमराशिदशायाम् ॥ ३५ ॥

स्थिरदशायां यथाखण्डं निधनम् ॥२।१।३०॥ तत्रर्क्षविशेषः ॥२।१।३१॥ पापमध्ये पापकोणे रिपुरोगयोः पापे वा ॥२।१।३२॥ तदीशयोः केवलक्षीणेन्दुशुक्रदृष्टौ वा ॥२।१।३३॥ तत्राप्याद्यर्क्षारिनाथदृश्यनवभागाद्वा ॥२।१।३४॥

स्थिरदशायां 'शशिनन्दपावकाः क्रमाद्ब्दाः—'(२।३।३) इति वक्ष्यमाणलक्षणायां यथाखण्डं खण्डमनतिक्रम्य वर्तत इति यथाखण्डम् । लग्नात्पञ्चमान्तं प्रथमं खण्डम्, पञ्चमान्नवमान्तं द्वितीयं खण्डम्, नवमाद्व्ययान्तं तृतीयं खण्डमिति संप्रदायविदः । स्थिरदशानुरोधेन पूर्णायुषः खण्डत्रये परिकल्पिते, हीनायुषः प्रथमे मध्यायुषो द्वितीये दीर्घायुषस्तृतीये खण्डे निधनं स्यात् ॥ तत्र यथानिर्दिष्टखण्डेऽपि 'पापमध्ये' इत्या-

दिना निरूपित ऋक्षविशेषो निधनकारी स्यात् ॥ पापमध्ये पापद्वयमध्यवर्तिराशिदशाया पापकोणे प्रथमदशाप्रदराशित्रिकोणे, रिपु (=१२) द्वादश॰, रोग (=$\frac{३}{२}\frac{२}{१}$=८) अष्टम, द्वादशाष्टमयो पापे पापाक्रान्ते वा निधनं स्यात् । यस्मादुक्तस्थाने सपापे तद्राशिदशायामिति तात्पर्यम् ॥ तदीशयोस्तथाभूतद्वादशाष्टमराशिस्वामिनोरुपरि केवलयो क्षीणेन्दुशुक्रयोर्दृष्ट्या सत्या द्वादशाष्टमराशिदशाया निधन स्यात् । अथवा तदीशयोर्द्वारबाह्यराशीशयोरिति व्याख्येयम् ॥ तत्रापि मारकराशिदशायामपि आद्यर्क्षं प्रथमदशाप्रदो यो राशिस्तस्माद् य अरि (=$\frac{३}{२}\frac{२}{१}$=८) अष्टमराशिस्तत्राधेन द्वयो यो राशिस्तस्यान्तर्दशाया वा निधन स्यात् । अथवा आद्यर्क्षारी दशमषष्ठराशी इति स्वामी । अन्ये त्वन्यथा ॥

अथ निधनराशिविशेषं दर्शयितुं प्राप्यप्राणिभेदेन द्विविधं रुद्रग्रहमुपजात्याह—

लग्नारकलत्रादपि यौ मृतीशौ तयोर्बलीयानुपलभ्यते यः ।
स रुद्रसंज्ञः खचरः प्रदिष्टो बलेन हीनोऽपि खलेन दृष्टः ॥ ३६ ॥

अथ रुद्रग्रहफल सविशेषं स्रग्धराभ्यामाह—

सबुदृष्टे रुद्रखेटे बलिनि निगदितं रुद्रशूलान्तमायु-
र्नूनं तत्रापि सौम्ययुचरपरिगते तावदायुर्वदन्ति ।
न व्यर्कक्रूरयोगेऽथ शशिज्ञनिकुजालोकितेवीतसौम्ये
वा पापाढ्येऽपि सौम्येक्षणवति परतो यात्र रुद्रद्वयेऽपि ॥३७॥
शूले चेदन्तशूले भवति हि मरणं प्रायशोऽस्याश्रितर्क्षे-
ऽप्यङ्के मीने विशेषादुदयनिधनगो रुद्रराश्यन्तमायुः ।
अल्पं चेदाद्यशूले मृतिरिह घटते मध्यमं मध्यशूले
दीर्घं पर्यन्तशूले तदिदमृषिवचस्तारतम्येन विद्यात् ॥ ३८ ॥

पितृलाभभावेशप्राणी रुद्रः ॥२।१।३५॥ अप्राण्यपि पापदृष्टः ॥२।१।३६॥ प्राणिनि शुभदृष्टे रुद्रशूलान्तमायु· ॥२।१।३७॥ तत्रापि शुभयोगे ॥२।१।३८॥ व्यर्कपापयोगे न ॥२।१।३९॥ मन्दारेन्दुदृष्टेशुभयोगाभावे पापयोगेऽपि वा शुभदृष्टौ वा परतः ॥२।१।४०॥ शूले चेत्तदन्तशूले ॥२।१।४१॥ रुद्राश्रयेऽपि प्रायेण ॥२।१।४२॥ क्रिये पितरि विशेषेण ॥२।१।४३॥ द्वन्द्वे रुद्रे तदन्तं प्रायः ॥२।१।४४॥ प्रथममध्यमोत्तमेषु वा तत्तदायुषाम् ॥२।१।४५॥

पिता (=$\frac{६}{१}\frac{१}{२}$=१) लग्न, अम (=$\frac{४}{५}\frac{३}{२}$=७) सप्तम, ताभ्यां क्रमोत्क्रमगणनया यौ भावौ (=$\frac{४}{१}\frac{४}{२}$=८) अष्टमराशी तयोर्याविशौ स्वामिनौ तयोर्मध्ये यः प्राणी बलवान् स रुद्राख्यो ग्रह स्यात् ॥ लग्नसप्तमाभ्या यावष्टमेशौ तत्र दुर्बलोऽपि पापदृष्टश्चेद्रुद्र । तथा च प्राणी अप्राणीति द्वौ रुद्रौ स्याताम् ॥ रुद्रे प्राणिनि बलवति शुभदृष्टे च सति रुद्रशूलान्तमायु । यथाक्रममल्पमध्यदीर्घायुर्वशेन प्रथमद्वितीयतृतीयशूलपर्यन्तमायु

स्यात्। लग्नादि प्रथम शूल, पञ्चमादिद्वितीय शूल, नवमादिस्तृतीय शूल इति साम्प्रदायिका ॥ तत्रापि प्राणिनि रुद्रेऽपि शुभयोगे सत्यवश्य रुद्रशूलान्तमायु स्यात्। इति कारिकाकार । तत्र द्वितीये रुद्रेऽपि शुभयोगे सति रुद्रशूलान्तमायुर्भवति न तु शुभदृष्ट्येति भाव । इति सुबोधिनीकार ॥ अर्कमपहायान्यपापयोगे सत्येतत्फल न जायते। अर्कयोगेन त्वेतस्य भङ्ग ॥ प्राणिनि अप्राणिनि वा रुद्रे मन्दारेन्दुदृष्टे शुभयोगाभावे एको योग । रुद्रद्वये मन्दारेन्दुदृष्टे शुभदृष्टे सत्या वा तृतीयो योग । प्रथमो योग शुभयोगाभावघटितो, द्वितीय पापयोगघटित इति, प्रथमयोग शुभपापयोग-रहित इति सिध्यति । योगत्रये सपूर्णे सति परतो रुद्रशूलान्तादग्रे आयु स्यात् ॥ अत्र शुभपापा वृद्धैर्निर्णीता —

'अर्कारमन्दफणिन क्रमात्क्रूरा यथाथयम्।
चन्द्रोऽपि क्रूर एवात्र क्वचिदङ्गारकाश्रये।
गुरुज्ञकविहा स्युर्यथापूर्वं शुभग्रहा ॥' इति।
'प्रत्येक शुभराशिस्थ उभयस्थो वा बुध शुभ ।
'गुरुशुक्रौ च सौम्यस्थौ ततोऽन्यत्राशुभा स्मृता ॥' इति च ।

क्रमाद् यथोत्तरम् । यथाश्रय यथाक्रूरसौम्यराशिसथयम् । यथापूर्वं बुधाच्छुक्र शुक्रात्केतु केतोर्गुरुरिति यथोत्तरम् । शेष स्पष्टम् ॥ चेच्छूले मृत्युस्तर्हि तदन्तशूले रुद्रशूलगद्वादशान्त घातिन्या तदन्तर्दशायाम् ॥ अर्थोऽथ वृद्धैरुपबृंहित —

'पापमात्रस्य शूलत्वे प्रथमर्क्षे मृतिर्भवेत्।
मिश्रे मध्यमशूलर्क्षे शुभमात्रेऽन्तिमे मृति ॥' इति।
'क्रूराश्रयेषु क्षेत्रेषु शुभानामाश्रयेषु च ।
निर्याणमीरित्त तत्तु शूलर्क्षेष्वेव निर्दिशेत् ॥' इति च।

यदि द्वावपि रुद्रौ पापौ तर्हि प्रथमशूले, यदि चैको रुद्र पाप पर शुभस्तर्हि द्वितीयशूले, यदि च द्वावपि शुभौ तर्ह्यन्तशूले, मृत्यु स्यात् ॥ प्रायेण रुद्राश्रये रुद्रग्रहाधिष्ठितराशावपि मृत्यु स्यात्। प्रायशब्दोपादानेन रुद्राश्रयात्प्राक् पश्चाद्वेति स्वत सिद्धम् ॥ त्रिय (=१२) मीन पिता (=$\frac{५}{१}\frac{२}{२}$=१) लग्न तस्मिन्मीने लग्ने सति विशेषेण रुद्राधिष्ठे राशौ मृत्यु स्यात् ॥ क्रियोमेष इति स्वाम्यादय ॥ द्वन्द्व (=$\frac{४}{१}\frac{४}{२}$=८) अष्टम तस्मिन्नष्टमे रुद्रे रुद्रद्वये सति रुद्राश्रितराशिदशाया प्रायो मृत्यु । द्वन्द्व द्विस्वभावराशिरिति स्वामी ॥ अल्पमध्यदीर्घरूपाणा तत्तदायुषा प्रथममध्यमोत्तमेषु त्रिषु शूलेषु वा क्रमेण मृत्यु स्यादिति ॥

अथ प्रकारान्तरेणायुर्निश्चयाय महेश्वराख्यमद्युपजात्याह—

**स्वतोऽष्टमेशो हि महेश्वरो भवेत्स्वोच्चे स्वभेरिष्फमृतीशयोर्बली।**
**स्वस्मिन्सपाते निधनालये वा महेश्वर कारकपष्ठमूचिरे ॥ ३९ ॥**

स्वत इति। स्वस्मिन्कारके स्वोच्चे स्वभे वेति योजना। स्वस्मिन्निधनालये वा सपाते इति योजना। सूर्यादिगणनया कारकषष्ठ महेश्वरमूचिरे ॥ ३९ ॥

अथ ब्रह्ममहेश्वरयो फलमुपजात्याह—

ब्रह्मग्रहाधिष्ठितभाच्च यावन्महेश्वरर्क्षस्य दशान्तमायुः ।
तत्रापि माहेश्वरतोऽष्टमेशत्रिकोणराशे· परिपाककाले ॥ ४० ॥

अथ मारकग्रहान्वसन्ततिलकेनाह—

लग्नात्स्वतश्च सहज(३)क्षत(६)रिप्फ(१२)रन्ध्र-
(८)नाथेषु वीर्यबहलो मृतिदोऽरिपस्तु ।
प्रायेण मारकखगर्क्षदशासु मृत्यु-
स्तत्रास्ततोऽरि(६)निधन(८)व्यय(१२)पाऽपहारे ॥ ४१ ॥

लग्नादिति । अपहारेऽन्तर्दशायाम् ॥ ४१ ॥

स्वभावेशो महेश्वर· ॥२।१।४६॥ स्वोच्चे स्वमे रिपुभावेशप्राणी ॥२।१।४७॥ पाताभ्यां योगे स्वस्य तयोर्वा रोगे ततः ॥२।१।४८॥ ब्रह्मणो याव· न्महेश्वरर्क्षदशान्तमायुः ॥२।१।५५॥ तत्रापि महेश्वरभावेशत्रिकोणाब्दे ॥२।१।५६॥ स्वकर्मचित्तरिपुरोगनाथप्राणी मारकः ॥२।१।५७॥ चित्तनाथ· प्रायेण ॥२।१।५८॥ तदृक्षदशायां निधनम् ॥२।१।५९॥ तत्रापि कालाद्रि· पुरोगचित्तनाथापहारे ॥२।१।६०॥

स्वाद् आत्मकारकाद् यो भाव (=${}^{४}_{१}{}^{४}_{२}$=८) अष्टम तदीशो महेश्वरो महेश्वराख्य· ग्रह इति परिभाष्यते ॥ आत्मकारके स्वोच्चे स्वगृहे वा वर्तमाने सति रिपु (=१२) द्वादश, भाव (=${}^{४}_{१}{}^{४}_{२}$=८) अष्टम·, एतयोर्यावीशौ तत्र प्राणी महेश्वर इति पूर्वेणानु· पङ्ग स्वस्य आत्मकारकस्य पाताभ्या राहुकेतुभ्या योगे सति अथवा स्वाद् रोग (=${}^{३}_{१}{}^{२}_{२}$=८) अष्टम तत्र तयो पातयोर्योगे सति तत (=${}^{६}_{१}{}^{६}_{२}$=६) सूर्यादिगणनया आ· त्मकारकात् षष्ठो महेश्वर इति ॥ स्थिरदशाया ब्रह्मग्रहाश्रितराशिमारभ्य महेश्वरग्रहा श्रितराशिदशापर्यन्तमायु स्यात् ॥ तत्रापि महेश्वरग्रहाश्रितराशिदशायामपि महेश्वरा श्रितराशितो यो भाव (=${}^{४}_{१}{}^{४}_{२}$=८) अष्टमराशिस्तस्य य ईशस्तस्मात्त्रिकोण पञ्चम· नवमवर्ती राशिस्तस्याब्देऽन्तर्दशाकाले मृत्यु स्यात् ॥ स्वाद् आत्मकारकात् लग्नाद्वा क्रम (=${}^{५}_{१}{}^{१}_{२}$=३) तृतीय, चित्त (=${}^{६}_{१}{}^{६}_{२}$=६) षष्ठ, रिपु (=१२) द्वादश, रोग (=${}^{३}_{१}{}^{२}_{२}$=८) अष्टम, एतद्राशिनाथाना मध्य य प्राणी स मारक स्यात् ॥ तत्र चित्त· नाथ षष्ठेश, प्रायेण बहुप्रकारेणेति स्वामी । मारक स्यात् ॥ तदृक्षदशायां मारका· श्रितराशिदशाया मारकस्वामिकराशिदशाया वा मृत्यु स्यात् ॥ तत्रापि मारकराशि· दशायामप्यात्मकारकाल्लग्नाद्वा य काल (=${}^{३}_{१}{}^{१}_{२}$=७) सप्तमस्तस्माद् रिपु (=१२) द्वादश, रोग (=${}^{३}_{१}{}^{२}_{२}$=८) अष्टम, चित्त (=${}^{६}_{१}{}^{६}_{२}$=६) षष्ठ, एतद्राशीनां ये नाथास्ते· षामपहारेऽन्तर्दशाभुक्तौ मृत्यु स्यात् ॥ अत्र विशेषमाह वृद्धः—

'षष्ठाष्टमेशौ भवतो मारकावष्टमेश्वर ।
प्रायेण मारको राशिदशास्तत्र विशेषत ॥

पष्ठमे पापभूयिष्ठे पष्ठेशो मुख्यमारकः ।
पष्ठात्त्रिकोणगो वापि मुख्यमारक इष्यते ॥
मध्यायुषि मृतिः पष्ठदशायामष्टमस्य वा ।
पष्ठात्त्रिकोणस्य पुनर्दीर्घाल्पविषये भवेत् ॥
पष्ठे बलयुते तस्य त्रिकोणे मृतिमादिशेत् ।
पष्ठेशश्चेद्बलाढ्यः स्यात्तत्त्रिकोणे मृतिं वदेत् ॥
व्यवस्थेयं समस्तापि कारकादिदशास्वपि ।
बलिनः शुक्र (१) शनिनो (७) र्ज्ञेयं पष्ठाष्टमादिकम् ॥
चरे चरस्थिरद्वन्द्वा इति यो राशिरागतः ।
स एव मारको राशिर्भवतीति विनिर्णयः ॥
बहुराशिसमावेशे बलवान्मारकः स्मृतः ।
चरइत्यादिनायुर्यत्तत्समाप्युचितो भवेत् ॥
यो राशिः स तु विज्ञेयो मारकः सूत्रसंमतः ॥' इति ।

चरेचरस्थिरद्वन्द्वा इति प्रतीकबोधितः संदर्भस्त्वयम्—

'लग्नेशरन्ध्रपयोश्च लग्नेन्दोर्लग्नहोरयोः ।
सूत्राण्येवं प्रयुञ्जीमात्संवादादायुषां त्रये ॥
चरेचरस्थिरद्वन्द्वाः स्थिरद्वन्द्वचरस्थिराः ।
द्वन्द्वेस्थिरोभयचरा दीर्घमध्याल्पकायुषः ॥' इति ।

अत्रायं नैलकण्ठीयो लेखः—पितृदिनेशादिद्विकानामाश्रयीभूतो यो राशिः स मारकः द्वे राशयो यदि बहवस्तर्हि 'अग्रहात्सग्रहो ज्यायान्सग्रहेष्वधिकग्रहः । साम्ये चरस्थिरद्वन्द्वाः क्रमात्स्युर्बलशालिनः ॥' इत्यनेन यो राशिर्बलवान् स मारकस्तद्राशिदशायां तदीशाश्रयराशिदशायां वा मृतिरिति । अपरे तु 'चर—' इत्यादिश्लोकेन यद्दीर्घायुः समागतं 'पूर्ण—' ( टी. १ प्रवा. ) इत्यादिना स्पष्टीकृतं तदायुर्यद्राशौ समाप्तं तद्राशिरेव मारक इत्यर्थः ॥

अथ प्रथमपादपदार्थानुपसंहरति—

इत्युक्तो धरणिसमुद्र (४१) संख्यपद्यैः
शास्त्रार्थो मुनिवचनानुरुद्ध एव ।
तेनायप्रशमितसंशयावतारं
छात्राणां मतिकमलं श्रियं दधातु ॥ ४२ ॥

इति श्रीदुर्गाप्रसादद्विवेदरचिते जैमिनिपद्यामृते निधननिर्णयो नाम पञ्चमः प्रवाहः श्रीगुरुचरणार्पणमस्तु । आदितः पद्यसंख्या १५४+४१=१९५

इत्युक्त इति ॥ स्पष्टम् ॥ ४२ ॥

इति श्रीजैमिनिपद्यामृतवृत्तौ मूलकन्दल्यां पञ्चमः प्रवाहः ॥

---

## अथ पञ्चः प्रवाहो विविच्यते ।

अथ पित्रादीनां निधनकालं विवक्षुस्तत्कारकादिविशेषं शार्दूलविक्रीडिताभ्यामाह—

यः प्राणी रविशुक्रयोः स जनकश्चन्द्रारयोस्तु प्रसू-
र्निर्वीर्योऽपि यथाक्रमं मलिनदृग्युक्तो भवेत्कारकः ।
तस्मिन्प्राणिनि सौम्यदृष्टियुजि तच्छूले हि पित्रोर्मृतिः
केचित्तन्निधनेश्वरे स्फुटबले तच्छूल इत्यादिशन् ॥१॥
आयुष्यन्यदपीक्षणीयमुदयाद्रिष्फेऽर्कसोम्यान्विते
तद्राशौ त्रिशरर्क्षपाकसमये तातान्तमाहुः परे ।
पित्रोर्व्यर्कमपापमात्रकदृशा प्राग्द्वादशाब्द्या मृति-
र्दाराणां गुरुयुग्मशूल इतरेषां चापि तच्छूलके ॥२॥

य प्राणीत्यादि । यो रविशुक्रयोर्मध्ये बली स पितृकारक । यश्चन्द्रभौमयो स मातृकारक । एतयोर्मध्ये निर्बलोऽपि पापदृष्टो यथाक्रम पितृमातृकारक स्यात् । तस्मिन् पितृकारके मातृकारके वा बलिनि शुभदृष्टे सति पितृमातृकारकाश्रितस्य राशेः त्रिकोणराशिदशाया पितुर्मातुश्च निधन स्यात् । प्राणिनोऽप्राणिनो वा कारकस्याष्टमेश्वरेऽधिकबले सति तदाश्रितराशित्रिकोणराशिदशायाम-ये निधनमादिशन्ति ॥ आयुषि विचारणीये उक्तमनुक्तमन्यदपि निरीक्षणीयम् । लग्नाद् द्वादशे राशौ सूर्यबुधान्विते तद्राशौ सिंहमिथुनकन्यान्यतमसत्त्वे तृतीयपञ्चमराशिदशाया परे पितृनिधनमाहु । मातृपितृकारकयोर्व्यर्कपापमात्रावलोकेन द्वादशाब्दा प्राक् मातापित्रोर्निधन स्यात् । गुर्वाक्रान्तराशित्रिकोणराशिदशाया स्त्रिया निधनम् । इतरेषा पुनर्मातुलादीनामपि तत्तत्कारकराशित्रिकोणराशिदशाया निधनमनुसधेयम् ॥ १—२ ॥

रविशुक्रयोः प्राणी जनकः ॥२।२।१॥ चन्द्रारयोर्जननी ॥२।२।२॥ अप्राण्यपि पापदृष्टः ॥२।२।३॥ प्राणिनि शुभदृष्टे तच्छूले निधनं मातापित्रोः ॥२।२।४॥ तन्नाथेशे स्पष्टबले तच्छूल इत्यन्ये ॥२।२।५॥ आयुषि चान्यत् ॥२।२।६॥ अर्कज्ञयोगे तदाश्रिते क्रिये लग्नमेपदशायां पितुरित्येके ॥२।२।७॥ व्यर्कपापमात्रदृष्टयोः पित्रोः प्राग्द्वादशाब्दात् ॥२।२।८॥ गुरुशूले दल भस्य ॥२।२।९॥ तत्तच्छूले तेषाम् ॥२।२।१०॥

रविशुक्रयोश्चन्द्रयोश्च मध्ये अप्राण्यपि पापदृष्टो यथाक्रम पितृमातृकारको भवेत् । यद्युभौ समप्राणौ तदा द्वावपि कारकाविति स्वामी ॥ प्राणिनीति चतुर्थं स्पष्टम् ॥ ता भ्या प्राण्यप्राणिकारकाभ्या भावौ (=$\frac{४}{१}\frac{२}{२}$=८) अष्टमौ तदीशे स्पष्टबले सति । शेष स्पष्टम् ॥ क्रिये (=१२) लग्नाद् द्वादशराशौ अर्कज्ञयोगे सूर्यबुधसत्त्वे तदाश्रये तत्सात्मिकसिंहमिथुनकन्यान्यतमराशिसत्त्वे सति लग्न (=३) तृतीयराशि मेप (=$\frac{५}{१}\frac{५}{२}$=५) पचमो राशिस्तद्दशाया पितृनिधनमित्येके । अत्र व्याख्याविकल्पः स्वामिग्रन्थे ॥ पित्रो प्राणिनोरप्राणिनोर्वा मातापितृकारकयोः । शेष स्पष्टम् ॥

अथ मरणनिमित्तानि मत्तमातङ्गलीलाकराख्यदण्डकेन पञ्चचामरेणार्यया वसन्ततिलकेन च प्रपञ्चयति—

लग्नतो वा स्वतो विक्रमे क्रूरयुक्तेक्षिते दुष्टभावेन मृत्यूदयो जायते
सौम्यदृग्योगसत्त्वे शुभो मिश्रखेटप्रसङ्गे तथाभूतनिर्याणमाख्यायते ।
भास्वता राजमूलात्तुषारांशुना यक्ष्मणः क्षोणिजेन व्रणाच्छस्त्राग्निदाहादितः
सौरिणा वाततो मन्दतन्नन्दनाभ्यां विषाम्बूरगोद्बन्धनाद्यान्निमित्तादपि ३

तथोदयात्स्वतोऽथवा तृतीयके शिखावता
विषूचिकाजलामयादितश्च मृत्युमादिशेत् ।
मृगाङ्कमान्दिसंक्रमेण पूगसंभवान्मदा-
द्विपान्नदानकैतवप्रयोगतश्च सत्वरम् ॥ ४ ॥
शोफारुचिवमनाद्याद् गुरुणा मेहाद् भृगूद्वहेनात्र ।
मिश्रान्मिश्रखुसदा शशिदृग्योगे तु निश्चयान्निधनम् ॥ ५ ॥
सौम्यग्रहैश्च निधनं शुभदेशमध्ये
पापैस्तु कुत्सिततमे किल कीकटाद्ये ।
वागीश्वरेण कविनापि च बोधपूर्व-
मन्यैस्तु विस्मृतिपुरस्सरमादिशन्ति ॥ ६ ॥

लग्नतो वा स्वत इत्यादि । तथाभूतनिर्याणं शुभाशुभमिश्रं निधनम् । मन्दतन्नन्दनाभ्यां मन्दमान्दिभ्यामित्यर्थः । शेषं स्पष्टम् ॥३–६॥

कर्मणि पापयुतदृष्टे दुष्टं मरणम् ॥२।२।११॥ शुभं शुभदृष्टियुते ॥२।२।१२॥ मिश्रे मिश्रम् ॥२।२।१३॥ आदित्येन राजमूलात् ॥२।२।१४॥ चन्द्रेण यक्ष्मणः ॥२।२।१५॥ कुजेन व्रणशस्त्राग्निदाहाद्यैः ॥२।२।१६॥ शनिना वातरोगात् ॥२।२।१७॥ मन्दमान्दिभ्यां विषसर्पजलोद्बन्धनादिभिः ॥२।२।१८॥ केतुना विषूचीजलरोगाद्यैः ॥२।२।१९॥ चन्द्रमान्दिभ्यां पूगमद्यान्नकबलादिभिः क्षणिकम् ॥२।२।२०॥ गुरुणा शोफारुचिवमनाद्यैः ॥२।२।२१॥ शुक्रेण मेहात् ॥२।२।२२॥ मिश्रैर्मिश्रात् ॥२।२।२३॥ चन्द्रदृग्योगान्निश्चयेन ॥२।२।२४॥ शुभैः शुभदेशे ॥२।२।२५॥ पापैः कीकटे ॥२।२।२६॥ गुरुशुक्राभ्यां ज्ञानपूर्वकम् ॥२।२।२७॥ अन्यैरन्यथा ॥२।२।२८॥

* लग्नात् कारकाद्वा कर्म (=[illegible]= ३) तृतीयः तस्मिन्पापयुते दृष्टे वा दुष्टमग्निजलपातबन्धनादिप्रयोज्यं मरणं स्यात् । सायासमिति परमार्थः ॥ लग्नात् कारकाद्वा तृतीये शुभयुक्ते दृष्टे वा शुभं ज्वरादिरोगप्रयोज्यं मरणं स्यात् । निरायासमिति परमार्थः ॥ मिश्रे शुभपापयुतदृष्टे तृतीये मिश्रं शुभाशुभात्मकं मरणम् ॥ 'लग्नात् कारकाद्वा तृतीये' इत्यंशोऽग्रे 'अन्यैरन्यथा' इति सूत्रं यावदनुवर्तनीयः ॥ मन्दमान्दिभ्यां शनिगुलिकाभ्याम् ॥ चन्द्रदृग्योगान्निश्चयेनेत्युक्त्या चन्द्रदृग्योगाभावे लग्नकारकाभ्यां तृतीयस्थान-

गतेनापि तत्तद्ग्रहेण तत्तद्रोगनिमित्तकं मरणं सदिग्धमिति गम्यते ॥ शुभैः पापैरिति बहुवचनमविवक्षितमिति नीलकण्ठ ॥ शेषं स्पष्टं पद्यतो व्याख्यात ॥

अथ लग्नद्वादशयोर्मध्यसज्ञा सफला सापवादा च स्रग्धरयाह—

लग्नाद्यं पूर्वषट्कं व्ययमुखमपरं षट्कमेतत्प्रदिष्टं
स्वं स्वं मध्यं तदन्तः खरकिरणभुवा राहुणा केतुना वा ।
पित्रोः संस्कारकर्ता न भवति मनुजः सौम्यदृग्योगसत्वे
योगोऽयं नाशमेति सरहस्यजने संगते वा पदाली ॥ ७ ॥

लग्नाद्यमिति । लग्नाद्यं पूर्वषट्कं स्वं मध्य लग्नमध्यमुक्तम् । व्ययमुखमपर षट्कं द्वादशादिषट्कं स्वं मध्य द्वादशमध्यमुक्तमित्यर्थ । तदन्त लग्नमध्ये, खरकिरणभुवा शनिना, राहुणा केतुना वाधिष्ठिते मातु सस्कारकर्ता न स्यात् । एवं तदन्त. द्वादशमध्ये, शनिना राहुणा केतुना वाधिष्ठिते पितु सस्कारकर्ता न स्यात् । सस्कार और्ध्वदैहिक-लक्षणः । अत्र सौम्यग्रहदृष्टियुतिसत्वे पित्रोः सस्कारकर्तृलक्षणोऽयं दुर्योग. सरहस्य-जनेऽनुष्ठिते सति संगता आपदालीव नाशमेतीत्यर्थ ॥ ७ ॥

लेयादिजनकयोर्मध्ये शनिराहुकेतुभिः पित्रोर्न संस्कर्ता ॥२।२।२९॥
लेयादिपूर्वार्धे जनकाद्यपरार्धे ॥२।२।३०॥ शुभदृग्योगान्न ॥२।२।३१॥

लेय (=१३=१) लग्नम्, जनकः (=१२=१२) द्वादशः तयोर्मध्ये शनिराहुभ्या शनिकेतुभ्या वा स्थिताभ्या मातापित्रोः सस्कर्ता न स्यात् ॥ लेयादिपूर्वार्धे लग्नादिपूर्व-षट्के, जनकाद्यपरार्धे द्वादशादिव्युत्क्रमेणोत्तरषट्के यथाक्रम लग्नद्वादशमध्यसंज्ञिते । तत्र वर्तमानाभ्या शनिराहुभ्या शनिकेतुभ्या वा मातापित्रो सस्कर्ता न स्यादिति विधि-ष्यमध्यपदार्थबोधकं सूत्रम् ॥ तत्र शुभग्रहदृष्टियोगान्मातापित्रो. सस्कारकर्ता स्यादिति पूर्वयोगभङ्ग. ॥

अथ षष्ठपादपदार्थानुपसंहरति—

इत्युक्ताः श्रुतियुतराम ( ७ ) संख्यपद्यैः
शास्त्रार्था मुनिवचनानुरुद्ध एव ।
तेनाद्यप्रशमितसंशयावतारं
छात्राणां मतिकुमुदं मुदं प्रयातु ॥ ८ ॥

इति श्रीदुर्गाप्रसादद्विवेदरचिते जैमिनिपद्यामृते पित्रादिनिधननिर्णयो नाम षष्ठः प्रवाहः श्रीसद्गुरुचरणार्पणमस्तु । आदितः पद्यसंख्या १९५+७=२०२

इत्युक्त इति । श्रुतिनियुता रामा. सप्त । शेषं स्पष्टम् ॥ ८ ॥
इति श्रीजैमिनिपद्यामृतवृत्तौ मुकुन्दस्या षष्ठः प्रवाहः ॥

## अथ सप्तमः प्रवाहो विलिख्यते ।

अथ दशाभेदबलभेदान्विवक्षुरादावन्तर्दशा पुष्पिताग्रयाह—

भवति विषमभे क्रमात्तदादेः समभवने तु तदस्ततो विलोमात् ।
इह सकलदशान्तरप्रवृत्तिर्यदि न विशेषनिरूपितोऽथबाधः ॥ १ ॥

भवतीति स्पष्टार्थम् ॥ १ ॥

अथ निर्याणशूलदशामुपजातिकयाह—

लग्नास्तयोर्यो बलवांस्तदादिः प्रणीयते शूलदशान्तहेतुः ।
एकैकराशेः शरदश्चरादिवत्प्रातिस्विकं यत्र न मानमुच्यते ॥ २ ॥

लग्नास्तयोरिति । अथ सामान्येनाह—एकैकराशेरिति । शेषं स्पष्टम् ॥२॥

अथ पितुर्मातुरनुजस्य भगिनीपुत्रयोश्च निर्याणशूलदशा वैतालीयाभ्यामाह—

उदयास्तशुभर्क्षमांसलात् पितृनिर्याणदशा विधीयते ।
तत एव तुरीयकांसलाज् जननीशूलदशापि नीयते ॥ ३ ॥
मृतिशूलदशानुजन्मनस्तनुजायासहजोऽङ्कटादिका ।
भगिनीसुतयोस्तु सा भवेदुदयास्तात्मजयोर्यवन्मुखी ॥ ४ ॥

उदयास्तेत्यादि । उदयास्ताभ्यां ये शुभर्क्षे नवमराशी तयोर्मध्ये मांसलाद् बलवतः । तत एव उदयास्ताभ्यामेव यौ तुरीयौ राशी तयोर्मध्ये अंसलाद् बलवत. । एवं तनुजायाभ्यां यौ सहजौ तृतीयराशी तयोर्मध्ये उद्भटादिका बलवदात्मिका । एवमुदयास्ताभ्यां यावात्मजौ पञ्चमराशी तयोर्मध्ये वीर्यवन्मुखी । शेषं स्पष्टम् ॥३—४॥

अथ ज्येष्ठभ्रात्रादीनां निर्याणशूलदशां विद्युन्मालयाह—

लग्नास्ताभ्यां लाभमाणी यः स्यात्तस्माज्ज्येष्ठभ्रातुः ।
मातापित्रोस्तुल्या वेद्या तत्कल्पानां निर्याणोक्तिः ॥ ५ ॥

लग्नास्ताभ्यामिति । तत्कल्पानां मातापित्रो. सदृशानाम् ॥ ५ ॥

विषमे तदादिर्नवमांशः ॥२।३।१॥ अन्यथादर्शादिः ॥२।३।२॥ पितृलाभप्रथमप्राण्यादिः शूलदशा निर्याणे ॥२।३।१८॥ पितृलाभपुत्रप्राण्यादिः पितुः ॥२।३।१९॥ आदर्शादिर्मातुः ॥२।३।२०॥ कर्मादिर्भ्रातुः ॥२।३।२१॥ मात्रादिर्भगिनीपुत्रयोः ॥२।३।२२॥ व्ययादिर्ज्येष्ठस्य ॥२।३।२३॥ पितृवत्पितृवर्गे ॥२।३।२४॥ मातृवन्मातृवर्गे ॥२।३।२५॥

विषमे ओजे महादशाराशौ सति तदादिः क्रमेण नवांशोऽन्तर्दशा प्रणीयते । अन्यथा समे आदर्शादिरुत्क्रमेणेति योजना । एतदुक्तं भवति—यथा पुरतोऽवस्थापिते दर्पणे बिम्बप्रतिबिम्बयोरव्यवहितावस्थानं तथा क्रमोत्क्रमाभ्यां लग्नादिद्वादशादिगणनाप्यव्यवहितावस्थानाभिप्रायिकेति प्रतिभाति । 'आदर्शादिर्मातु' ( २।३।२० ) इति सौत्रप्रयोगेण मुनीन्द्रस्यादर्शशब्दो नियमेन सप्तमवाचको नाभिप्रेत इत्यपि ध्य-

क्रम् । आदृश्यते रूपमत्रेत्यादर्श । आदर्शौ दर्पण इति पर्यायौ । आदर्श समुखो भवतीत्यादि शिरोमणीयनामनामाष्यरैस्यस्तु सममण्डलानुरुद्धदर्शनाभिप्रायक । तेन 'स्थूलादर्श—' (२।४।२०) इत्यत्रादर्शशब्द सप्तमवाचकतया प्राचा व्याख्यातोऽपि । निर्याणे निर्णीयमाने पिता (=$\frac{६}{१}\frac{१}{२}$=१) लग्न, लाभ (=$\frac{४}{१}\frac{३}{२}$=७) सप्तमम्, एतयोर्मध्ये य प्रथमप्राणी बलाधिकस्तदादिका शूलदशा स्यात् । लग्नसप्तमान्यतरत्रिकोणराशि· दशा निर्याणकारिणीत्यर्थं ॥ पितृलाभाभ्या लग्नसप्तमाभ्या सकाशाद् यथाप्राप्तक्रमोत्क्र· मगणनया यौ पुत्रौ (=$\frac{३}{१}\frac{२}{२}$=९) नवमराशी तत्र बलवदादि पितुर्निर्याणदशा स्यात् ॥ तथा आदर्श (=३$\frac{८}{१}\frac{०}{२}$=४) बलवाश्चतुर्थराशिस्तदादिर्मातुर्निर्याणदशा स्यात् ॥ तथा कर्म (=$\frac{२}{१}\frac{१}{२}$=३) बलवाँस्तृतीयराशिस्तदादिर्भ्रातुर्निर्याणदशा स्यात् ॥ तथा माधा (=$\frac{६}{१}\frac{५}{२}$=५) बलवान् पञ्चमराशिस्तदादिर्भगिनीपुत्रयोर्निर्याणदशा स्यात् ॥ तथा व्यय (=११) बलवानेकादशराशिस्तदादिर्ज्येष्ठस्य निर्याणदशा स्यात् ॥ यथा तथाभूतबलवप्र· थमादिप्रवृत्ता पितृनिर्याणदशा तथैव पितृवर्गस्य पितृव्यादेरपि निर्याणदशेत्यर्थं ॥ मातृ· वदिति स्पष्टम् ॥

अथ निर्याणदशासु प्रकारान्तरेण शूलदशा अब्दगणना चोपजातिकयाह—

**यो नैधनात्सप्तमराशिरस्माद् विधीयते शूलदशावशेषम् ।**
**ओजेऽङ्गकेतः क्रमतः समे तूत्क्रमाच्च वर्षाण्यत्र एव विद्यात् ॥ ६ ॥**

य इति स्पष्टम् । 'लग्नात्तयो'—, इत्यादिना प्राड् नैकधा निर्याणदशा दर्शिता । तत्र किल लग्नसप्तमयोमध्ये सप्तमो धनुर्बलवत्, तत उत्क्रमेण दशा प्रवर्त्या । वर्षाणि स्थिरवत् । इह दीर्घायुष सद्भावात् धनुषस्त्रिकोणराशी मेषसिंहौ । तत्र सिंहो निर्याणभम् ॥

लग्नसप्तमाभ्या नवमराशी कुम्भसिंहो, तत्र सिंहो बलवान् अत पितुर्निर्याणमन्वेष्यम्। एव मात्रादीनामपि ॥

निर्याणराशावन्विष्टे तत इद प्रकारान्तरमप्यवतारणीयम् ॥ ६ ॥

**निर्याणलाभादि शूलदशा फले ॥२।४।१६॥ पुरुषे समा· सामा न्यतः ॥२।४।१७॥**

फले फलनिमित्त शूलदशा तत्र शूल—महेश्वरक्षादिभेदेन अनेकधा । तत्र निर्या· णराशेर्यो लाभ (=$\frac{४}{१}\frac{३}{२}$=७) सप्तम तदादिरिय दशा ॥ पुरुषे विषमराशौ सामान्यत क्रमात्, अन्यथा उत्क्रमादित्यर्थाल्लभ्यम् ॥

अथ मण्डूकाख्यामन्तर्दशामुपजातिकयाह—

**ओजात्क्रमादुत्क्रमतश्च युग्माल्लग्नात्तयोर्वीर्यवतश्च राशेः ।**
**वदन्ति मण्डूकदशा त्रिकूटक्रमेण निर्याणविपाकसिद्ध्यै ॥ ७ ॥**

ओजादिति स्पष्टम् । अन्तर्भोगकालस्तु चरान्तर इवावसेय. ॥

**स्थूलादर्शवैषम्याश्रयो मण्डूकस्त्रिकूटः ॥२।४।१५॥**

स्थूलः (=$\frac{३}{२}\frac{७}{२}$=१) लग्नम्, आदर्शः सप्तमः, एतयोर्मध्ये वैषम्याश्रयो बलाधिक्यवान् दशारम्भहेतुभूतः । त्रयः कूटाश्चरस्थिरद्विस्वभावा यत्रासौ त्रिकूटः । मण्डूको मण्डूकाख्यान्तर्दशा । मण्डूक इव गतौ प्लुतियोगवशादन्वर्था ॥

अथ मण्डूकदशोदाहरणम् ।

लग्नसप्तमयोर्मध्ये सप्तमो धनूराशिर्बलवाँस्तेन पूर्वं धनुषि धनुरादित्रिकूटक्रमेण दशा प्रवर्तनीया ॥ तत्रायं क्रमः —धनुषि धनुर्मीनमिथुनकन्यामकरमेषकर्कतुलाकुम्भवृषसिंहवृश्चिकाः । एवमग्रे ॥

अथ बलविभागमुपजातिकाचतुष्टयेनाह—

**प्राणोऽत्र राशेः, स च कारकाख्ययोगः, समत्वे द्युचराधिकत्वम् ।**
**ततो हि तुङ्गादिरतो निसर्गश्चरादिकक्रामिकवीर्यवाही ॥ ८ ॥**
**पत्युस्ततः कारकसंगमादिरंशाधिकश्चात्र बली विशेषात् ।**
**ओजे द्वितीयव्ययगो बलीयानितीरितं राशिबलं किलाद्यम् ॥ ९ ॥**
**बलं द्वितीयं पतिजीवचान्द्रिदृग्योग, ईशस्य बलं तृतीयम् ।**
**स्वात्कण्टकादिष्वधिपस्य वीर्यं पूर्णक्रमेणापचयं प्रयाति ॥ १० ॥**
**बलं चतुर्थं खलदृष्टियोगतुङ्गादियातग्रहयुक्तिरोजे ।**
**इत्थं बलानामवधार्य तत्त्वं दैवज्ञवर्यैः फलमूहनीयम् ॥ ११ ॥**

प्राणोऽत्र राशेरित्यादि । स्पष्टार्थम् ॥ ८—११ ॥

**अथ प्राणः ॥२।३।५॥ कारकयोगः प्रथमो भानाम् ॥२।३।६॥ साम्ये भूयसा ॥२।३।७॥ ततस्तुङ्गादिः ॥२।३।८॥ निसर्गस्ततः ॥२।३।९॥ तदभावे स्वामिन इत्थं भावः ॥२।३।१०॥ आम्रायत्तो विशेषात् ॥२।३।११॥ प्रातिवेशिकः पुरुषे ॥२।३।१२॥ इति प्रथमः ॥२।३।१३॥ स्वामिगुरुज्ञदृग्योगो द्वितीयः ॥२।३।१४॥ स्वामिनस्तृतीयः ॥२।३।१५॥ स्वात्स्वामिनः कण्टकादिष्वपारदौर्वल्यम् ॥२।३।१६॥ चतुर्थतः पुरुषे ॥२।३।१७॥ पापदृग्योगस्तुङ्गादिग्रहयोगः ॥२।३।१८॥ इति चत्वारः ॥२।३।१९॥**

राशीनामाद्यबलं कारकग्रहयोगः ॥ ग्रहयोगसाम्ये भूयसा अधिकसंख्येन ग्रहयोगेन बलम् ॥ ततो भूयस्त्वानन्तरं राशेस्तुङ्गादिः स्वतुङ्गस्वगृहस्वमित्रगृहस्थग्रहयोगो बलम् ॥ ततस्तुङ्गादिबलानन्तरं चरात्स्थिरः, स्थिराद् द्विस्वभाव इति क्रमेण बली ॥ तदभावे कारकयोगाद्यभावे स्वामिनो राश्यधिपयोरित्थं भावः कारकयोगादिर्बलम् ॥ अत्र बलचिन्तायां विशेषाद् आम्रायत्तोऽधिकांशग्रहो बली ॥ पुरुषे ओजराशौ प्रातिवेशिक उभयपार्श्ववृत्तिर्द्विद्वादशगतो ग्रहो बलाधायक इत्यर्थः ॥ इति प्रथमः प्राणः ॥ 'स्वामिगुरुज्ञानां दृष्टयो योगा द्वितीयः प्राणः॥ स्वामिनस्तृतीयः प्राणः 'स्वात्स्वामिनः'—, इत्याद्युक्तः॥ स्वाद् आत्मकारकात् कण्टकादिषु केन्द्रपणफरापोक्लिमेषु स्वामिनो राश्यधिपयोरपारदौर्बल्यं

स्यात् । एतदुक्तं भवति—केन्द्रे पूर्णं पणफरे ततो न्यूनमापोक्लिमे ततोऽपि न्यूनम् ॥ पुरुषे विषमराशौ 'पापदृग्योग'—,इति चतुर्थबलाद्बलं स्यात् ॥ पापग्रहाणां दृष्टियोग स्तथा तुङ्गादिगतग्रहयोगो बलं स्यात् ॥ 'कारकयोग'—,इत्यादिना त्रय एकोऽयमिति चत्वारः प्राणा ॥

अथ सप्तमपादपदार्थानुपसंहरति—

इत्युक्तः शशधरभूमि (११) संख्यपद्यैः शास्त्रार्थो मुनिवचनानुरुद्ध एव।
तेनाद्य प्रशमितसंशयावतारं छात्राणां मतिमुकुरश्चमत्करोतु ॥ १२ ॥

इति श्रीदुर्गाप्रसादद्विवेदरचिते जैमिनिपद्यामृते दशाभेदादिप्रस्तावो नाम सप्तमः प्रवाहः । श्रीदगुरुचरणार्पणमस्तु । आदितः पद्यसंख्या २०२+११=२१३

इत्युक्त इति । मतिरेव मुकुरो दर्पणः ॥ शेषं स्पष्टम् ॥ १२ ॥

इति श्रीजैमिनिपद्यामृतटीकायां मूलकन्दल्यां सप्तमः प्रवाहः ॥

---

## अथाष्टमः प्रवाहो विविच्यते।

अथ कारककेन्द्रदशा दोधकनयेनाह—

कारककेन्द्रदशा हि तदादिस्थायिन एव नवांशकनाथाः ।
लग्नचतुष्टयमासलपूर्वा द्वादश राशय उद्धरणीयाः ॥ १ ॥
अत्र पराक्रमते बलशाली लग्नतदस्तभयोः कलत्रासु ।
स्वामिगृहावधिकाऽधिकसंख्या व्योमसदामपि वर्षमितिः स्यात् ॥२॥
जातकतत्त्वमहानिधिमुद्राद्रावणकर्मपटुप्रतिभानैः ।
स्वामिबलानि फलानि च बुध्वा प्राग्वदमुत्र यथायथमूह्यम् ॥ ३ ॥

कारककेन्द्रदशेत्यादि । तदादिस्थायिनः केन्द्रादिवर्तिनो राशय एव नवांशकानामन्तर्दशाना नाथा स्युः । एतदुक्तं भवति—केन्द्रस्था पणफरस्था आपोक्लिमस्था राशयोऽन्तर्दशास्वामिनो भवन्ति । तत्र लग्नादिचतुष्टये बलक्रमेण दुर्बलान्ता अन्तर्दशा गणनीया। अथ लग्नात् तत्सप्तमाद्वा अन्तर्दशा प्रारभ्यते क्रमोत्क्रमाभ्याम् । जातकतत्त्वे स्वादिफलप्रपञ्चः ॥ १–३ ॥

स्वकेन्द्रस्थाद्या स्वामिनो नवांशानाम् ॥२।४।११॥ पितृचतुष्टयवैषम्य बलाश्रयः स्थितः ॥२।४।१२॥ स तल्लाभयोरावर्तते ॥२।४।१३॥ स्वामिबल फलानि च प्राग्वत् ॥२।४।१४॥

स्वकेन्द्रस्थाद्या स्व आत्मकारकः तस्य केन्द्रादिगता राशयो नवांशानामन्तर्दशानां स्वामिनः स्युः । पूर्वं केन्द्रस्था ततः पणफरस्था ततः आपोक्लिमस्था राशय इति

तात्पर्यम् ॥ पितुः $(=\frac{६}{६}\frac{३}{३}=१)$ लग्नचतुष्टये लग्नादिकेन्द्रे वैषम्यबलाश्रयोऽधिकप्राणो यो राशिस्तत्पूर्वको दशाप्रदो राशिः स्थितः व्यवस्थितः ॥ स तल्लाभयोः कारकसप्तमयोरावर्तते परिणमितो भवति ॥ स्वामीति सूत्रं स्पष्टं पद्यतो व्याख्यातं च ॥

अथ कारककेन्द्रदशोदाहरणम्।

अत्र सूर्यः कारकस्ततः सप्तमश्चन्द्रः एतयोरधिष्ठाने वृश्चिकवृषौ। इह बलवतो वृश्चिकाद् उत्क्रमेण कारकराशिदशा प्रवर्तनीया। तत्रान्तर्दशैवम्—कारकाधिष्ठितवृश्चिकराशेरुत्क्रमेण केन्द्रीभूतानां वृश्चिकसिंहवृषकुम्भानां मध्ये वृश्चिको बलवत्त्वेन पूर्वं वृश्चिकराशौ वृश्चिकस्य, ततस्तन्न्यूनबलस्य वृषस्य, ततस्तन्न्यूनबलस्य सिंहस्य, ततः कुम्भस्य; अथ कारकादिकेन्द्रपणफरीभूतानां तुलाकर्कमेषमकराणां मध्ये बलक्रमेण पूर्वं मकरस्य, ततः कर्कमेषतुलानाम्; अथ कारकादिकेन्द्रापोक्लिमीभूतानां कन्यामिथुनमीनधनुषां मध्ये बलक्रमेण पूर्वं कन्यायास्ततो धनुर्मिथुनमीनानामन्तर्दशा प्रवर्तनीयेति। एवमेव तुलादिषु। अन्तर्दशाभोगकालस्तु दशामासादिः प्रतिराशिसमानः ॥

कारककेन्द्रदशाचक्रम्।

| सू. बु. के. | | मं. | बृ. | | ल. | चं. रा. | | | | शु. | श. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| वृश्चि. | तु. | क. | सिं. | कर्क. | मी. | वृ. | मे. | मी. | कुं. | म. | ध. |
| १० | ३ | १० | ९ | २ | ५ | ८ | ९ | ७ | ९ | १ | ८. |
| १९२५ | १९३५ | १९३८ | १९४८ | १९५७ | १९५९ | १९६४ | १९७२ | १९८१ | १९८८ | १९९७ | १९९८ (२००६) |
| ७ २९ ५१ २४ | | | | | | | | | | | ७ २९ ५१ २४ |

अथ कारककेन्द्रदशायां कारकादीनामन्दप्रदर्शनम्।

अत्र प्रथमं तावत्कारकस्य सूर्यस्य, पश्चात्तद्युक्तस्य बुधस्य केतोश्च; ततः केन्द्रगतानां चन्द्रराहुगुरूणां, ततः पणफरगतस्य शुक्रस्य, ततः आपोक्लिमगतयोर्मङ्गलशनैश्चरयोश्चेति दशाक्रमः। तत्राब्दाः 'स्वामिवृद्ध—' इत्यादिना। अन्तर्दशाश्चलासु त्रैराशिकैः॥

कारककेन्द्राब्दचक्रम्।

| सू | बु | के. | च | रा | गु | शु | मं | श |
|---|---|---|---|---|---|---|---|---|
| ३ | ५ | १२ | ११ | ३ | ७ | ८ | १० | २ |
| १९२९ | १९३२ | १९३७ | १९४९ | १९६० | १९६३ | १९७० | १९७८ | १९८८ (१९९०) |
| ७<br>२९<br>५१<br>२४ | | | | | | | | ७<br>२९<br>५१<br>२४ |

अत्रेद चक्रमावश्यकम्—'स्वकेन्द्रस्याद्या' इति सूत्रेण कारकदशा आक्षिप्यते। सा केन्द्रारभ्यतया कारककेन्द्रदशेति व्यवह्रियते। एव तदाश्रितराशितदन्तर्दशे अपि लभ्येते। उभयलिङ्गात्। नवो नूतन अशो माग नवाश, स्वस्मिनपि स्वदायभागयोगात्। अन्तराश इति तात्पर्यम्। एवमेव पदेशोपपदेशदशे तदन्तर्दशे अपि प्रवर्तयितु शक्ये।

अथ नक्षत्रदशा आर्ययाह—

विंशोत्तर्यादिदशासरणिर्नक्षत्रदायसंपन्ना।
गौरीश्वरसंवादे सपरिकरा साधु मीमांस्या ॥ ४ ॥

सिद्धा उडुदाये ॥२।४।१८॥

उडुदाये नक्षत्रायुर्दाये विंशोत्तर्यादिदशा सिद्धा ज्ञेया। तथा च मम पद्यानि—

तर्का दिश शिखरिणो धृतयो महीपा नन्देन्दवो नगभुवो मुनय खदस्रा।
सूर्येन्दुभूसुतविधुंतुदजीवसौरिविस्केतुभार्गवदशाशरद स्वसूर्या ॥

६+१०+७+१८+१६+१९+१८+७+२०=१२०

जन्मर्क्षे दस्रहृते नन्दभक्तावशेषिते। वह्निभाद्भास्करादीना दशा विंशोत्तरीक्रमे ॥

स्वजन्मकालिकी दशा मयातनाडिका हृता मभोगनाडिकोद्धृता फल यता दशा भवेत्।
अपानया विवर्जिता स्वजन्मकालिकी दशा दशान्त भोग्यसञ्ज्ञिता तत शुभाशुभ वदेत् ॥

महादशा स्वस्वदशाभिराहता खनेत्रचन्द्रैर्विहृता समादिका।
अन्तर्दशा व्योमसदा भव त्वयो आसां समासेन महादशा मता ॥

यथा सूर्यान्त सूर्यस्य दशा $\frac{६\times६\times१२\times३०}{१२०}$=मा ३ दि १८ एव चन्द्रादीनामपि।
अथ सूर्यव्यन्तरम्। तत्र पूर्वानीतव्यन्तरम् ३।१८ सवर्णित जातम् १०८ ततोऽनुपातेन $\frac{१०८\times६\times६०}{१२०}$=दि ५ घ २४ इद व्यन्तरम्। अथ सूर्यप्रत्यन्तरम् तत्र व्यन्तरम् ५ घ २४ सवर्णित जातम् ३२४ ततोऽनुपातेन $\frac{३२४\times६\times६०}{१२०}$=घ १६ प. १२ अत्र फलान्युडुदायप्रदीपाख्येन निबन्धरत्नेन ज्ञेयानीति दिक्।

अथ विंशोत्तरीदशोदाहरणम् ।

जन्मदिने सूर्योदयात्कृत्तिकानक्षत्रस्य भोग्यघट्यादि ७।४१ जन्मेष्टम् ३०।५९ अतो रोहिणीनक्षत्रे जन्मेति ज्ञानं जातमेव । अथात्र रोहिणीनक्षत्रस्य जन्मसमये गतगम्यघट्यादीनामानयनम् । तद्यथा—जन्मेष्टम् ३०।५९ कृत्तिकाया भोग्यघट्यादिना ७।४१ हीनं २३।१८ जातं रोहिणीनक्षत्रस्य भुक्तघट्यादि । इदमेव भयातम् । कृत्तिकाया भोग्यघट्यः ७।४१ षष्टिघटीभ्यः शुद्धाः ५२।१९ अग्रिमदिवसीयपञ्चाङ्गस्थरोहिणीनक्षत्रभोग्यघट्यादिना ९।४६ सहिता ६२।५ जातं रोहिण्या भोग्यघट्यादिभभोगः ६२।५ अयमेव भभोगः । अथ दशाया भुक्तभोग्यवर्षाद्यानयनम्—

रोहिणीनक्षत्रे जन्म तेन चन्द्रस्य महादशायां जन्म, तस्य दशावर्षाणि दश, ततोऽनुपातः—यदि भभोगेन ६२।५ दशावर्षाणि दश लभ्यन्ते तदा भयातेन २३।१८ किम् ६२।५ : १० : : २३।१८ सवर्णितं जातम्

३७२५ : १० : : १३९८ = $\frac{१३९८०}{३७२५}$

३७२५) १३९८० (३ वर्षाणि
११९७५
२८०५ द्वादश १२ गुणितम्
३३६६० (९ मासाः
३३५२५
१३५ त्रिंशता ३० गुणितम्
४०५० (१ दिनम्
३७२५
३२५ षष्टि ६० गुणितम्
१९५०० (५ घट्यः
१८६२५
८७५ पुनः षष्ट्या ६० गुणितम्
५२५०० (१४ पलानि
३७२५
१५२५०
१४९००
३५० पुनरपि षष्ट्या ६० गुणितम्
२१००० (५ विपलानि
१८६२५
२३७५ शेषमर्धाधिकमिति षट् विपलानि गृहीतानि ।

एवं चन्द्रस्य पूर्वं भुक्तदशा वर्षादिका=३ व. ९ मा. १ दि. ५ घ. १४ प. ६ वि. । दशभ्यः शुद्धा भोग्यदशा वर्षादिका=६।२।२८।५४।४५।५४ ॥

अथ विंशोत्तरीदशाचक्रम् ।

| चं. | मं. | रा. | बृ. | श. | बु. | के. | शु. | सू. |
|---|---|---|---|---|---|---|---|---|
| ६<br>२<br>२८<br>५४<br>४५<br>५४ | ७ | १८ | १६ | १९ | १७ | ७ | २० | ६ |
| १९२९ | १९३५ | १९४२ | १९६० | १९७६ | १९९५ | २०१२ | २०१९ | २०३९<br>(२०४५) |
| ७<br>२९<br>५१<br>२४ | १०<br>२८<br>४६<br>१० | | | | | | | १०<br>२८<br>४६<br>१० |

अथो आर्यागीत्योद्गीतिभ्यां दृग्दशामाह—

उदयान्नवमतदीक्षितदशमतदीक्षितभवतदीक्षितानां च ।
राशीनां निर्दिष्टा त्रिकूटपदक्रमेण दृग्दशासरणिः ॥ ५ ॥

यद्युदयान्नवमर्क्षं भवति वृषो वृश्चिकः सिंहः ।
कुम्भोऽथवा तदानीं नवमो राशिर्विलोमतो ग्राह्यः ॥ ६ ॥

क्रमतश्चरेषु शरगजशिवाः स्थिरेषूत्क्रमादेते ।
द्विलनुपु वेदनगाशा दर्शनयोग्याश्च राशयोऽभिहिताः ॥ ७ ॥

उदयादित्यादि । क्रमत इत्यादिना प्रागुक्तो दृष्टिक्रमो निबद्धः ॥ ५–७॥

कुजादित्रिकूटपदक्रमेण दृग्दशा ॥२।४।२१॥ मातृधर्मयोः सामान्यं विपरीतमोजकूटयोः ॥२।४।२२॥ यथा सामान्यं युग्मे ॥२।४।२३ ॥

कुजः (=$\frac{६}{१}\frac{३}{}$=९ ) नवमः तदादिर्लमतो नवमादित्रिकूटपदक्रमेण नवमदशमैकादशरादिरूपेण दृग्दशा ज्ञेया । अन्वर्था संज्ञा ॥ माता (=$\frac{६}{१}\frac{३}{}$=५ ) सिंहः, धर्मः (=$\frac{४}{१}\frac{३}{}$=११) कुम्भः, एतयोरोजकूटयोर्गणनायां सामान्यमनुलोमगणना विपरीतं विलोमगणना स्यात् । युग्मे युग्मकूटे यौ वृषवृश्चिकौ तयोर्यथासामान्यं यथाशास्त्रं विलोमगणनैव स्यात् ॥

अथ दृग्दशोदाहरणम् ।

'वदमानवम—'इत्यादिना दृग्दशा प्रवर्तनीया । तत्र त्रिकूटपदक्रमेण स्थिरदशाव-रद इति ॥

अथ दृग्दशाचक्रम् ।

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | | चं. रा. | वृ. | सू बु. के. | शु. | | | श. | | | ल. | मं. |
| वृ. | कुं. | वृ. | सिं. | वृश्चि | म. | मे. | क. | ध | मी. | | मि. | कन्या |
| ७ | ८ | ८ | ८ | ८ | ७ | ७ | ७ | ९ | ९ | | ९ | ९ |
| १९२९ | १९३६ | १९४४ | १९५२ | १९६० | १९६८ | १९७५ | १९८२ | १९८३ | १९९८ | | २००७ | २०१६ (२०२५) |
| ७<br>२९<br>५१<br>३४ | | | | | | | | | | | | ७<br>२९<br>५१<br>३४ |

अथ श्लोकाभ्यां त्रिकोणदशामाह—

लग्नपञ्चमधर्माणां यो राशिर्बलवान्भवेत् ।
तमारभ्य त्रिकोणाख्यदशारम्भः प्रजायते ॥ ८ ॥
अनुलोमविलोमाभ्यां गणना विषमे समे ।
राशौ दशावत्सरास्तु बोध्या नाथावसानकाः ॥ ९ ॥

लग्नपञ्चमधर्माणामित्यादि । लग्नादीनां मध्ये यो बलवाँस्तमारभ्य क्रमोत्क्रमाभ्यां लग्नादि-त्रिकोणचतुष्टयानुसारेण दशा प्रवर्तनीया । तत्राब्दाश्चरदशावदिति निष्कर्षः ॥ ८-९ ॥

पितृमातृधर्मप्राण्यादिस्त्रिकोणे ॥२।४।२४॥

त्रिकोणे त्रिकोणदशाया पिता (=१२=१) लग्नम्, माता (=५१=५) पञ्चमः धर्मो नवमः । प्रकृतसूत्रानुरोधाद् धनेति पाठः साधीयान् । तथात्र धनम् (=९) पितृमातृधनानां लग्नपञ्चमनवमानां मध्ये य. प्राणी बलवान् तदादि- क्रमोत्क्रमाभ्यां राशीनां दशा प्रवर्तनीया । त्रिकोणेत्यन्वर्थसंज्ञा । अत्रान्तराणि चरदशायामिव गणनीयानि ॥

अथ त्रिकोणदशोदाहरणम् ।

लग्नपञ्चमनवमानां मध्ये लग्नस्थमिथुनराशिर्बलवाँस्तेन मिथुनादिका यथोक्ता त्रिकोणदशा प्रवर्तनीया ।

## अथ त्रिकोणदशाचक्रम् ।

| ल. | | | | सू. बु. के. | | बृ. | श. | | मं. गु. | शु. | चं.रा. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मि. | तु. | कुं. | कर्क. | वृश्चि. | मी. | सिं. | ध. | मे. | क. | म. | वृ. |
| ५ | ३ | ९ | २ | १० | ७ | ९ | ८ | ५ | १० | १ | ८ |
| १९२९ | १९३४ | १९३७ | १९४६ | १९४८ | १९५८ | १९६५ | १९७४ | १९८२ | १९८७ | १९९७ | १९९८ (२००६) |
| ७ २९ ५१ २४ | | | | | | | | | | | ७ २९ ५१ २४ |

अथ पाकभोगराशीन्दर्शयन्ननुष्टुभा फलमतिदिशति—

त्रैकोणिकदशायां तु द्वार्याद्यानुरोधतः ।
होरोदन्वत्पारदृश्वा पूर्ववत्फलमादिशेत् ॥ १० ॥

त्रिकोणेति । होरैव दुरवगाहत्वादिना उदन्वान् उदधिस्तस्य पारदृश्वा ॥ १० ॥

**तत्र द्वार्याद्याभ्यां तद्वत् ॥२।४।२५॥**

तत्र त्रिकोणदशायाम् ॥

अथ तत्तत्कारकेभ्यस्तत्तत्स्थानफलमनुष्टुभाह—

सप्तमाद्य तृतीयाद्य प्रथमान्नवमादपि ।
दारान्भ्रातरमात्मानं गुरुं च चिन्तयेत्स्वतः ॥ ११ ॥

सप्तमाद्येति ॥ ११ ॥

**घासगैरिकपत्नीकरात्कारकैः फलादेशः ॥२।४।२६॥**

घासः (=४७ ३२=७) सप्तमः, गैरिकः (=१३ ३२=३) तृतीयः, तस्मात् । पत्नी (=१) प्रथमः, करः (=११ ३२=९) नवमः, तस्मात् । कारकैस्तत्तत्कारकैः फलादेशः ॥

अथ नक्षत्रदशामनुष्टुभाह—

यन्नक्षत्रे भवेज्जन्म तन्नाड्योऽर्कविभाजिताः ।
क्रमोत्क्रमाभ्यां लग्नादिराशयोऽत्र दशाधिपाः ॥ १२ ॥

यदिति ॥ १२ ॥

तारार्कांशे मन्दाद्यो दशेशाः ॥२।४।२७॥

ताराया(चन्द्रनक्षत्रस्या)र्कांशे द्वादशभागे मन्दः ( ञ्ज्ञ=१ ) लग्नं तदाद्यो दशेशो दशास्वामी । एतदुक्तं भवति—जन्मकाले यन्नक्षत्रं तस्य याः सर्वर्क्षघट्यस्ता घटिकाविघटिकास्ता द्वादशधा विभज्य प्रथमखण्डमारभ्य द्वादशसु खण्डेषु क्रमेण लग्नादिद्वादशराशयो दशास्वामिनः । तथा लग्नमारभ्य क्रमोत्क्रमभेदेन द्वादशराशिदशाः । दशाब्दाः स्थिरवत् ॥

अथ नक्षत्रदशोदाहरणम् ।

रोहिण्यां जन्म । तेन पूर्वसाधिते भभोगभयाते ३७२५,१३९८। एतयोर्मध्ये भभोगे ३७२५ द्वादशहृते फलं पलादि ३१०।२५। अनेन भयाते १३९८ हृते फलं राश्यादि ४।१५।१।३१।इदं जन्मलग्ने २।२७।४५।२७ योजिते जातम् ७।१३।५१।५८। अतः प्रथमदशास्वामी वृश्चिकराशिस्ततो व्युत्क्रमेण द्वादशराशीनां दशा प्रवर्तनीयेति ।

अथ नक्षत्रदशाचक्रम् ।

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| सू. बु. के. | | मं. गु. | शु. | | ल. | चं. रा. | | | | श. | श. |
| वृश्चि. | तु. | क. | सिं. | कर्क. | मि. | वृ. | मे. | मी. | कुं. | म. | ध. |
| ८ | ७ | ९ | ८ | ७ | ९ | ८ | ६ | ९ | ८ | ७ | ९ |
| १९२९ | १९३७ | १९४४ | १९५३ | १९६१ | १९६८ | १९७७ | १९८५ | १९९१ | २००१ | २००९ | २०१६ (२०२५) |
| ७ २९ ५१ २४ | | | | | | | | | | | ७ २९ ५१ २४ |

अथ तारालग्नफलमनुष्टुभाह—

तारालग्ने तुङ्गयाते नीचगे चापि लक्ष्मणाः ।
मित्रराशिगते किंचिदरिभस्थे तु दुर्गताः ॥ १३ ॥

तारालग्न इति ॥ १३ ॥

तस्मिन्नुच्चे नीचे वा श्रीमन्तः ॥२।४।२८॥ स्वमित्रभे किंचित् ॥२।४।२९॥ दुर्गतोऽपरथा ॥२।४।३०॥

दुर्गतो दरिद्रः । शेषं स्पष्टम् ॥

अथान्तर्दशोपदशे अनुष्टुभ्यामाह—

ओजराशावोजपदे कारके क्रम इष्यते ।
युग्मभे व्युत्क्रमो युग्मपदे तु विपरीतता ॥ १४ ॥
अहो मन्देऽपि संचार्यमिति केचित्प्रचक्षते ।
अन्तर्भुक्त्यंशयोरेतद्वेदितव्यं प्रयत्नतः ॥ १५ ॥

ओजराशाविति । अत्र ओजराशावित्युक्तं यत्सर्वं मन्दे वेदितव्यमिति केषांचिन्मतम् ॥ १४-१५ ॥

स्वैषम्ये यथाद्यं क्रमव्युत्क्रमौ ॥२।४।३१॥ साम्ये विपरीतम् ॥ २।४।३२ ॥ शनौ चेत्येके ॥ २।४।३३॥ अन्तर्भुक्त्यंशयोरेतत् ॥२।४।३४ ॥

स्वस्यात्मकारकस्य वैषम्ये विषमपदत्वे यथाद्यं यथाक्रमम्, क्रमव्युत्क्रमौ विषमपदे विषमराशिश्चेत्क्रमः समराशिश्चेद् व्युत्क्रमः साम्ये युग्मपदत्वे विपरीतं समराशौ क्रमो विषमराशौ व्युत्क्रम इति ॥ यथा कारके विषमसमपदभेदेन क्रमोत्क्रमतद्विपरीतत्वानि तथा शनाविति केचित् । अत्र चकारस्थाने वाकारः सुगमः ॥ अन्तर्भुक्त्यंशो अन्तर्दशोपदशे तयोरेतत्कर्म ॥

अथ सामान्येन दशाफलमनुष्टुभाह—

शुभा दशा शुभयुते राशावुच्चेऽथवा ग्रहे ।
अन्यथा त्वन्यथा बोध्या दशा जातककोविदैः ॥ १६ ॥

शुभेति ॥ १६ ॥

शुभा दशा शुभयुते धाम्न्युच्चे वा ॥२।४।३५॥ अन्यथाऽन्यथा ॥२।४।३६॥

धाम्नि राशौ शुभयुते सति तद्राशिदशा शुभा स्यात् । उच्चग्रहयुते राशौ तदधिपे चोच्चे तद्राशिदशा शुभा स्यात् ॥ अन्यथा पापनीचादिसाहित्ये तद्राशिदशाऽन्यथा स्यात् ॥

अथ शास्त्रार्थं समाप्तमनुष्टुभोपसंहरति—

सिद्धमन्यदिति प्राह शास्त्रान्ते भूरिबोधकम्।
सिद्धिर्वृद्धिः समृद्धिश्च जायतां पठतामिदम्॥ १७॥

सिद्धमन्यदिति। इदं जैमिनिपद्यामृतं कर्म। शेषं स्पष्टम्॥ १७॥

सिद्धमन्यत्॥२।४।२७॥

अन्यदनुक्तं सिद्धं शास्त्रान्तरे प्रसिद्धम्।

अथ तत्रभवन्तं सूत्रकारं प्रति विद्यान्मणिगुणनिकरेणानुकूलयन्नाह—

प्रतिजनमियमिताद्विचरसहज-
व्यतिकरविनिगमविकसनकृतये।
स्फुटफलमधुररसमशनमनसः
प्रणमत मुनिवरमतिशयमहसम्॥ १८॥

प्रतिजनेति। स्फुटेति तृतीयचरणं संबोधनम्॥ १८॥

अथ श्रीगुरुस्मरणपूर्वकं तस्मै प्रकृतकृतिं समर्पयंस्तस्या अभ्युदयं शार्दूलविक्रीडितेनाह—

ब्रह्मध्यानविचारपूजनकलासाम्राज्यसौभाग्यभाग्
भाति श्रीसरयूप्रसादसुमनाः श्रीकण्ठविद्यागुरुः।
अस्य श्रीचरणारविन्दयुगले भक्त्यार्पितासौ कृति-
श्छात्राणां प्रतिमोदयं विदधती कल्पान्तमुन्मीलतु॥ १९॥

ब्रह्मेति। श्रीकण्ठविद्या प्रत्यभिज्ञादर्शनादिः॥ १९॥

अथाद्यन्तपादपदार्थानुपसंहरति—

इत्युक्तः खलु नवचन्द्र(१९)संख्यपद्यैः
शास्त्रार्थो मुनिवचनानुबद्ध एव।
तेनायं प्रशमितसंशयावतारं
छात्राणां मतिमहिमा महत्त्वमेतु॥ २०॥

इति श्रीमदयोध्याप्रान्तवर्तिपण्डितपुरीवास्तव्यद्विवेदोपाख्यपण्डितदुर्गाप्रसादरचिते जैमिनिपद्यामृते प्रकीर्णप्रपञ्चोनामाष्टमः प्रवाहोऽष्टाविंशत्यधिकाष्टादशशततमे शालिवाहनशाके जयपुरराजधान्यां परिपूर्तिमापन्नः श्री ६ गुरुचरणार्पणमस्तु। आदितः पद्यसंख्या २१३+१९=२३२द्वात्रिंशताधिका द्विशतीति शिवम्॥

इत्युक्त इति॥ २०॥

ये सन्ति सुज्ञाः फलितावगाहिनस्तेभ्यो नमोवाकमुदीर्य सादरम् ।
निवेद्यते यन्मयकात्र दुष्कृतं तत्साधुदृष्ट्या सुकृतं विधीयताम् ॥

न यत्र युक्तिर्गणितानुसारिणी न व्याहृतिर्वानुभवैकसाक्षिणी ।
चिरानुभूतिप्रतिभानमन्तरा न तत्र किंचिद्गमकं प्रतीयते ॥

धाः कष्टमास्तामिहितेऽपि शासने परम्पराच्छिन्नपदार्थकल्पने ।
मुह्यन्ति विज्ञा अपि दूरदर्शिनः किं मादृशाष्टिप्पणपिष्टपेषिणः ॥

चिराय जीव्यान्मम शिष्यसत्तमः स माधवो माधवपादसेवकः ।
यद्यत्नतो जैमिनिमूलकन्दली समाप्तिमागाज्जयपत्तनान्तरे ॥

जयन्ति ते जातकचन्द्रचन्द्रिका क्षणक्षणलालितचित्तवृत्तयः ।
येषां स्वते खेचरचक्रमातुरप्रकृष्टसम्बन्धविशेषवासना ॥

इति श्रीदुर्गाप्रसादद्विवेदविरचितायां जैमिनिपद्यामृतवृत्तौ मूलकन्दल्यामष्टमः प्रवाहः ।

सन्दर्भः समाप्त इति शिवम् ॥



श्रीगणेशाय नमः।

# अथ यावल्लब्धवृद्धकारिकाणां संग्रहः।

उभयानुभयः पश्येच्चरान् स्थाणुः स्थिरांश्चरः।
समीपसंस्थितं राशिं त्यक्त्वा त्रींस्त्रीन् यथाक्रमम्॥ इति।
चरं धनं विना स्थास्नुं स्थिरमन्त्यं विना चरम्।
युग्मं स्वेन विना युग्मं पश्यतीत्ययमागमः॥ इति च।
भय (२) पुण्य (११) विना (४) भावाद् द्रष्टुराहुः शुभार्गलम्'
स्फुट (१२) गो (३) ज्ञेय(१०)भावात्तु विपरीतार्गलं विदुः॥ (इति)
भागाधिकः कारकः स्यादल्पभागोऽन्त्यकारकः।
मध्यांशो मध्यखेटः स्यादुपखेटः स एव हि॥ इति।
आदित्यान्नवमे तातश्चन्द्रान्माता चतुर्थतः।
भौमात्तृतीयको भ्राता च बुधात्षष्ठे च मातुलः॥
गुरोः पञ्चमतः पुत्रः शुक्रात्सप्तमतः स्त्रियः।
शनेरष्टमतो मृत्युरिति तातादि चिन्तयेत्॥ इति।
कर्माद् वृषे वृश्चिके च व्युत्क्रमात्कुम्भसिंहयोः॥ इति।
तस्मात्स्वीशपर्यन्तं संख्यामत्र दशां विदुः॥ इति।
षष्ठद्वादशकं तत्र न चेदेकं विनिर्दिशेत्॥ इति च।
कुजसौरी केतुराहू राजानावलिकुम्भयोः।
कुजसौरी केतुराहू युक्तौ तत्र स्थितौ यदि।
षष्ठद्वादशकं तत्र न चेदेकं विनिर्दिशेत्॥ (इति)।
द्विनायक्षेत्रयोरत्र निर्णयः कथ्यतेऽधुना।
एकः स्वक्षेत्रगोऽन्यस्त्वपरत्र यदि संस्थितः॥
तदान्यत्र स्थितं नाथं परिगृह्य दशां नयेत्।
द्वावप्यन्यर्क्षगौ तौ चेत्स ग्रहो बलवान् नयेत्॥

१—२ कारिकयोस्तात्पर्यमेकमेव; अत एते भिन्नकर्तृके। 'चरस्थं स्थिरगः पश्येत् स्थिरस्थं चरराशिगः। उभयस्थं तूभयगो निकटस्थं विना ग्रहम्॥' इति वृद्धकारिकान्तरं नैलकण्ठीये॥ ३ मध्यांश इति। 'अन्ये तु ग्रहा वक्ष्यमाणरीत्या उपकारका भवन्तीति पर्यवसितोऽर्थः' इति स्वामी॥ ४ आदित्यादिति। 'भगिन्यारतः स्यालक' इत्यादिसूत्राणि प्राचीनैर्दिङ्मात्रदर्शनेनोपबृंहितानि' इति स्वामी॥ ५ कर्मादिति 'न क्वचित्' सूत्रार्थः॥ ६ 'कुजसौरी' इत्यर्धकारिका स्वामिटीकापुस्तकान्तरे नास्ति॥ ७ 'द्विनायक्षेत्रयोः' इत्यर्धकारिका स्वामिटीकापुस्तकान्तरे नास्ति॥ ८ एतदग्रे 'स्वक्षेत्रे स्थितिमात्रेण स्वामी न स्येष्टदशाक्षमा। एकस्य स्वदशात्वं नहि कार्योपयोगिकम्' इत्यधिकं नैलकण्ठीये॥

ग्रहयोगसमानत्वे चिन्त्यं राशिबलाद्बलम् ।
राशिसत्वसमानत्वे बहुवर्षो बली भवेत् ॥
एकः स्वोच्चगतस्त्वन्यः परत्र यदि संस्थितः ।
ग्राहयेदुच्चखेटस्थं राशिमन्यं विहाय वै[1] ॥
एवं सर्वं समालोच्य जातस्य निधनं वदेत् ॥ इति ।
अग्रहात्सग्रहो ज्यायान् सग्रहेष्वधिकग्रहः ।
साम्ये चरस्थिरद्वन्द्वाः क्रमात्स्युर्बलशालिनः ॥ इति ।
उच्चखेटस्य सद्भावे वर्षमेकं तु निक्षिपेत् ।
तथैव नीचखेटस्य वर्षमेकं विशोधयेत् ॥ इति ।
[2]न्यासयोर्ग्रहहीनत्वे वैकस्यान्येन संयुतौ ।
ग्राह्यो राशिर्ग्रहाभावस्तत्स्वाम्युच्चं गतो यदि ॥
एकत्र स्वभगः खेटश्चान्यत्र द्वौ ग्रहौ यदि ।
ग्रहद्वययुतिं हित्वा ग्राहयेत्पूर्वभं सुधीः ॥ इति ।
लग्नाद्यावतिथे तिष्ठेद्राशौ लग्नेश्वरः क्रमात् ।
ततस्तावतिथं राशिं जन्मारूढं प्रचक्षते ॥ इति ।
लग्नाल्लग्नपतिर्यावद्राशिसंस्थस्ततः पुनः ।
तावान्नृपिमिरारूढः कथितः सर्वशास्त्रतः ॥ इति ।
यदा लग्नाधिपो लग्ने सप्तमे वा स्थितो यदि ।
आरूढं लग्नमेवात्र निर्दिशेत्कालवित्तमः ॥ [3]इति च ।
तथा सार्धद्विघटिकामितात्कालाद्विलग्नमात् ।
प्रयाति लग्नं तन्नाम होरालग्नं प्रचक्षते ॥
[4]वारपक्षांशमारभ्य घटिकानां तु पञ्चकम् ।
प्रयाति जन्मपर्यन्तं भावलग्नं तथैव च ॥ इति ।
ओजलग्नप्रसूतानां मेषादेर्गणयेत्क्रमात् ।
युग्मलग्नप्रसूतानां मीनादेरपसव्यतः ॥
मेषमीनादितो जन्मलग्नान्तं गणयेत्सुधीः ।
तथैव होरालग्नान्तं गणयित्वा ततः परम् ॥

---

1 एतदग्रे 'भावान्ता' इति रीत्या यो बहुवर्षवती दशाम् । करोति बहुवर्षोऽसौ स्वराशेर्द्विग. स्वग. ॥' इत्यधिकं नैलकण्ठीये ॥ 2 न्यासयोरिति । 'एवमग्रहादिति न्यायानुगुणमेव विशेषान्तर बृहद्भिरुक्तम्' इति स्वामी ॥ 3 एतदग्रे 'इदं च लग्नारूढं निरूपकम् श्लोकेन पदान्तराणामप्युपलक्षणं द्रष्टव्यम् स्वराशौ स्वसप्तमे वा नाथे इति तदेव पदमिति विभावनीयम्' इत्युक्तवान् स्वामी ॥ 4 'सूर्योदयं समारभ्य' इति पाठान्तरं नैलकण्ठीये ॥

पुंस्त्वेन स्त्रीतया चैते सजातीये उभे यदि।
तर्हि संख्ये योजयीत वैजात्ये तु वियोजयेत्॥
मेषमीनादितः पञ्चायो राशिः स तु वर्णदः। इति।
होरालग्नमयोर्नेयाऽऽदुर्बलाद्वर्णदा दशा।
यत्संख्यो वर्णदो लग्नात्तत्तत्संख्याक्रमेण तु॥
क्रमव्युत्क्रमभेदेन दशा स्यात्पुरुषस्त्रियोः। (इति।)
पापदृष्टिः पापयोगो वर्णदस्य त्रिकोणके।
यदि स्यात्तर्हि तद्राशिपर्यन्तं तस्य जीवनम्॥
रुद्रशूले यथैवायुर्मरणादि निरूप्यते।
तथैव वर्णदस्यापि त्रिकोणे पापसंगमे॥
वर्णदात्सप्तमराशेः कलत्रादि विचिन्तयेत्।
एकादशादग्रजं तु तृतीयात्तु यवीयसम्॥
चिन्तयेद्[1] इति.
पञ्चमे तनुजं विद्यान्मातरं तुर्यपञ्चमे।
पितुस्तु नवमान्मातुः पञ्चमाद्वर्णदस्य तु॥
बालराशिदशायां वै प्रबलायामरिष्टकम्। (इति।)
कृत्वार्कधा राशिदशां राशेर्भुक्तिं क्रमाद्वदेत्।
एवं दशान्तर्दशादि कृत्वा तेन फलं वदेत्॥ इति।
एकैकभावस्यैकैकं वर्षलग्नादि कल्पयेत्।
सा पर्यायदशा लग्ने युग्मे तु व्युत्क्रमाद्वदेत्॥
लग्नं युग्मं यदा तर्हि संमुखं तस्य चादिमम्। इति।
यदारभ्य दशा तस्मिन्राशौ प्रथमवत्सरे।
कारकः स्याद् द्वितीयादिवत्सरेषु यथाक्रमम्॥
द्वितीयर्क्षादिषु भवेद्दशायां कारकस्य तु।
पूर्णायां कारकस्यैव केन्द्रस्थानां दशा भवेत्॥
ततः पणफरस्थानामापोक्लिमजुषां ततः।
कारकस्य दशा यत्र पूर्णराशौ ततः क्रमात्॥
आरभ्यानन्तरं राशिदशाः सर्वा भवेत्तथा॥ इति।
राशेरर्धं भवेद्धोरा ताश्चतुर्विंशतिः स्मृताः।
मेषादि तासां होराणां परिवृत्तिद्वयं भवेत्॥
राशित्रिभागो द्रेष्काणस्ते च षट् त्रिंशदीरिताः।
परिवृत्तित्रयं तेषां मेषादेः क्रमशो भवेत्॥ इति।

[1] 'चिन्तयेत्' इति खण्डं नास्ति नैलकण्ठीये॥

संतांशपा ओजगृहे तदीशा-
द्युग्मे गृहे सप्तमराशिपादिति ॥ ( इति. )
नवांशेशाश्चरे तस्मात्स्थिरे नवमादितः ।
उभये तत्पञ्चमादेरिति चिन्त्यं विचक्षणैः ॥ इति ।
द्वादशांशस्य गणनां तत्तत्क्षेत्राद्विनिर्दिशेत् ॥ इति ।
शुभराशौ शुभांशे वा कारके धनवान् भवेत् ।
तदंशकेन्द्रेषु शुभे राजा नूनं प्रजायते ॥
कारके शुभराश्यंशे लग्नांशस्थे शुभग्रहे ।
उपग्रहस्य पाश्चात्ये स्वोच्चस्वर्क्षशुभर्क्षगे ॥
पापदृग्योगरहिते कैवल्यं तस्य निर्दिशेत् ।
मिश्रे मिश्रं विजानीयाद्विपरीते विपर्ययः ॥
चन्द्रभृग्वारवर्गस्थे कारके पारदारिकः ।
बुधतौर्यंशकगते तस्मिन्वाणिज्यवान् भवेत् ॥
मेषसिंहांशगे तस्मिन् ब्रूयान्मूषिकदंशनम् ।
कारके कार्मुकांशस्थे वाहनात्पतनं भवेत् ॥ इति ।
रविवारादिशन्यन्तं गुलिकादि निरूप्यते ।
दिवसानष्टधा कृत्वा वारेशाद्गणयेत्क्रमात् ॥
अष्टमोंऽशो निरीशः स्याच्छन्यंशो गुलिकः स्मृतः ।
रात्रीरप्यष्टधा भक्त्वा वारेशात्पञ्चमादितः ॥
गणयेदष्टमः खण्डो निष्पत्तिः परिकीर्तितः ।
शन्यंशे गुलिशे प्रोक्तो गुर्वंशे यमघण्टकः ॥
भौमांशे मृत्युमादिष्टो रव्यंशे कालसंज्ञकः ।
सौम्यांशेर्धप्रहरकः स्पष्टकर्म स्वदेशतः ॥ इति ।
आरूढाज्जन्मलग्नाद्वा पापौ श्रीहतिगौ यदि ।
केवलौ, सग्रहत्वेऽपि समसंख्यौ शुभाशुभौ ॥

१ 'सप्तमांशपाः इत्यर्धं स्वामिटीकापुस्तकद्वये दृश्यते; तदेतत्सर्वार्थचिन्तामणावपि । नैलकण्ठीये 'सप्तांशपास्त्वोजगृहे गणनीया निजेशतः । युग्मराशौ तु विज्ञेयाः सप्तमर्क्षाधिनायकात्' इति श्लोकस्तदीयस्थानेऽन्यत्समानम् ॥ २ स्वामिटीकायाः प्रथमाध्यायस्य प्रथमपादे एतावत्यो वृद्धकारिका दृश्यन्ते । टीकान्तरे अन्या अपि कारिकाः परं त्वविश्वसनीयतया ता न संगृहीता इति विज्ञेयम् ॥ ३ 'कारकाश्रितांशकुण्डल्यां केन्द्रेषु' इति स्वामिनीलकण्ठौ ॥ ४ 'इदं कारकस्याप्युपलक्षणम् । श्रीहतिगौ द्वितीयाष्टमगौ । सग्रहत्वेऽपि शुभपापान्यन्तरयुक्तत्वेऽपि शुभाशुभाभ्यां सख्यासाम्ये केमद्रुम इति सन्नादल्प एव भेदः श्लोके इति नातीवविरुद्धार्थकत्वम्, इति स्वामी ॥

चन्द्रदृष्टौ विशेषेण योगः केमद्रुमो मतः । इति ।
आरूढाल्लाभभवनं ग्रहः पश्येत्तु न व्ययम् ।
यस्य जन्मनि सोऽपि स्यात्प्रबली धनवानपि ॥
द्रष्टृग्रहाणां बाहुल्ये तदा द्रष्टरि तुङ्गगे ।
सार्गले चापि तत्रापि बह्वर्गलसमागमे ॥
शुभग्रहार्गले तत्र तत्राप्युच्चग्रहार्गले ।
सुखानि स्वामिना दृष्टे लग्नभाग्याधिपेन वा ॥
जातस्य पुंसः प्राबल्यं निर्दिशेदुत्तरोत्तरम् ॥ इति ।
उच्चो वा हरिणाङ्को वा जीवो वा शुभ एव वा ।
एको बली धनगतः श्रियं दिशति देहिनाम् ॥ इति ।
आरूढात्पञ्चमे पापे चोरः स्याच्छुभवर्जिते । इति ।
आरूढाद्दारेऽपि सौम्ये तु सर्वदिश्यधिपो भवेत् ।
सर्वज्ञस्तत्र जीवे स्यात्कविर्वादी च भार्गवे ॥ (इति)
लग्नारूढं दारपदं मिथः केन्द्रगतं यदि ।
त्रिलाभेवा त्रिकोणे वा तदा राजान्यथाधमः ॥ इति ।
आरूढौ पुत्रपित्रोस्तु त्रिलाभौ केन्द्रगौ यदि ।
द्वयोर्मैत्री त्रिकोणे तु साम्यं द्वेषोऽन्यथा भवेत् ॥
जातकद्वयमालोक्य चिन्तनीयं विचक्षणैः ॥ इति ।
यस्य पापः शुभो वापि ग्रहस्तिष्ठेच्छुभार्गले ।
तेन द्रष्टेक्षितं लग्नं प्राबल्यायोपकल्प्यते ॥
यदि पश्येद्ग्रहस्तं न विपरीतार्गलस्थितः । इति ।
विलग्नघटिकालग्नहोरालग्नानि पश्यति ।
उच्चग्रहे राजयोगो लग्नद्वयमथापि वा ॥ इति ।
राशेर्द्रेष्काणतोंऽशाच्च राशेरंशात्तथापि वा ।
यद्वा राशिदृकाणाभ्यां लग्नद्रष्टा तु योगदः ॥

---

१ स्वामिटीकायाः प्रथमाध्यायस्य द्वितीयपादे एतावत्यो वृद्धकारिकाः ॥ २ कोऽपि ग्रहो यदि द्वादशं न पश्यति, इति स्वामी ॥ ३ 'पञ्चमे द्वितीये षष्ठे चेत्यर्थः 'इति स्वामी ॥ ४ 'वापितत्रेति द्वितीय इत्यर्थः, इति स्वामी ॥ ५ 'त्रिलाभ इत्यंशः सूत्रादधिको मतान्तरसिद्धः संगृहीतः' इति स्वामी ॥ ६ 'एवंदारादिभावानामपि पत्यादि मित्रता' इति स्वामी ॥ ७ 'श्लोकानुसारेण 'केन्द्र-(१।२।२०) इत्यादि सूत्रयुगं पुत्रपित्रादि जातकद्वयस्य जन्मलग्नारूढावादाय वा योजनीयम्' इति स्वामी ॥ ८-९ 'अत्र विलग्नेति, 'जन्म-( १।३।२४ ), इति सूत्रार्थस्य समाहृतम् । राशेरिति तु 'पश्ये-( १।३।२५ )' इति सूत्रार्थस्येति विवेकः, इति स्वामी ॥

प्रायेणायं जातकेषु प्रभूणामेव दृश्यते । इति च ।
[1]राशिमात्राल्लग्नदशां पश्येत्खेटस्तु केवलः । इति ।
[2]जन्मकालघटीलग्नेष्वेकेनैवेक्षितेषु तु ।
उच्चारूढे तु संप्राप्ते चन्द्राक्रान्ते विशेषतः ॥
क्रान्ते वा गुरुशुक्राभ्यां केनाप्युच्चग्रहेण वा ।
दुर्गलग्रहाभावे राजयोगो न संशयः ॥ इति ।
[3]शुभारूढे तत्र चन्द्रे धने देवगुरौ तथा ।
उच्चदृग्ग्रहेवार्थेऽप्युच्चखेटेऽथवा तथा ॥ इति ।
चन्द्रः कविं कविश्चन्द्रं पश्यत्यपि तृतीय[4]भे ।
[5]शुक्राच्चन्द्रे ततः शुक्रो द्वितीये वाहनार्थवान् ॥ इति ।
शुभारूढे तत्र चन्द्रे धने देवगुरौ स्थिते ।
आरूढेऽस्मिञ्शुक्रदृष्टे वाहनाढ्यो भवेन्नरः ॥ (इति.)
[6]आरूढयोगाः सर्वेऽपि जन्मलग्नेऽपि ते स्मृताः ।
जन्मलग्नाच्छुभे त्वर्थे तृतीये पापखेचरे ।
चतुर्थेऽपि शुभे प्राप्ते राजा च तत्समोपि वा ॥
चतुर्थकर्मार्थलाभपतिदृष्टे विलग्नभे ।
आरूढलाभे कविना दृष्टेऽप्यारूढभे शुभे ॥
राजा वा तत्समो वा; इति ।
लग्नं पश्यन्ति ये खेटास्ते सर्वे शुभदायिनः । (इति)
[7]नीचखेटोऽपि लग्नं चेत्पश्येद्राजा प्रकीर्तितः ॥ (इति)

---

१ 'जन्मानन्तरदशाहेतुभूतलग्नात्मकराशिमात्रं यद्येको ग्रहः पश्यति न तु कालघटीदृगा(का)णांशलग्नं पश्यति तर्हि स ग्रहः केवल इत्यर्थः इति स्वामी ॥ २ 'एवमेवान्यैरपि वृद्धैः 'जन्मकाल-(१+२।२४), इति प्रकरणमुपबृंहितम् । उच्चारूढे उच्चानां जन्मकालघटीलग्नानामुच्चग्रहाधिष्ठितानामारूढे पदे सति तस्मिन्नेव पदे चन्द्राक्रान्ते इत्यादि स्पष्टम् । यद्वा उच्चस्य उच्चराशिगतग्रहस्य राशावारूढे सतीत्यर्थः । उच्चारूढ इत्यादियोगान्तरपरम्' इति स्वामी ॥ ३ 'एवमपरैर्वृद्धैरारूढफलमादिष्टम् । तथाहि—शुभारूढे शुभानां जन्मकालघटीलग्नानां शुभग्रहाश्रितानां शुभग्रहस्वामिकानां वा आरूढे यदि । यद्वा शुभस्वामिके वा पदे इत्यर्थः' इति स्वामी ॥ ४ 'आरूढात्तृतीयभे इत्यर्थः' इति स्वामी ॥ ५ 'चन्द्रशुक्रयोः परस्परदर्शनमारूढतृतीयगत्वे चैको योगः । चन्द्रशुक्रयोः परस्परं द्वितीयस्थत्वमपरो योगः सामान्यः' इति स्वामी ॥ ६ 'चन्द्रः कविं-' इत्यादयो योगा जन्मलग्नतोऽपि विचारणीया इत्यर्थ इति स्वामी ॥ ७ 'अत्र लग्नद्रष्टा नीचग्रहो राजयोगकर्तेति सामान्यत उक्तम् । परंतु षष्ठाष्टमतृतीयलाभादिसंबन्धिनीचग्रह एव लग्नद्रष्टा राजयोगदो ग्राह्य इति सम्प्रदायः । अतएव वृद्धा अप्येवमेव केचन प्राहुः— राजयोगो जन्मलग्नं-' इति स्वामी ॥

राजयोगो जन्मलग्नं पश्येदुच्चग्रहो यदि ।
षष्ठाष्टमगते नीचे लग्नं पश्यति वा तथा ॥ (इति)
षष्ठाष्टमाधिपे नीचे लग्नं पश्यति वा तथा ।
तृतीयलाभगे नीचे लग्नं पश्यति वा तथा ॥ इति ।
षष्ठाष्टमभयोः खेटौ शुभौ यौ कौचनश्रितौ ।
पश्यतो जन्मलग्नं चेद्राजयोग उदाहृतः ॥ (इति)
चतुर्थे शुभखेटश्चेद्राजयोगः प्रकीर्तितः ।
[1]बलवान् स्याच्चतुर्थोऽपि चरादिषु यथोत्तरम् ॥ (इति)
[2]उच्चाद्युक्तग्रहः कश्चिल्लाभस्थो वा चतुर्थगः ।
धनस्थितो वा लग्नं चेत्पश्येद्वाहनकारकः ॥ (इति)
राजयोगाद्यभावे तु धनाधनविनिर्णयः ।
[3]शुभपापदृशा लग्ने तत्तत्केन्द्रादियोगतः ॥ (इति)
[4]यस्य लग्नांशके सौम्यः प्राबल्यं तस्य निश्चितम् ।
लग्नांशकेन्द्रेषु शुभे निग्रहानुग्रहक्षमः ॥ (इति)
लग्नत्रिकोणे द्वौ पापौ मिलितौ यदि पश्यतः ।
जन्मलग्नं विशेषेण योगो दारिद्र्यनामकः ॥
[5]एवं धनेऽपि द्रष्टव्यं महादारिद्र्यकारकम् । (इति)
[6]पापारूढे पापखेटे तत्रस्थे व्ययगे रवौ ।

---

१ 'चतुर्थे शुभे राजयोगः, तत्रापि चरचतुर्थमल्पफलम्' स्थिरचतुर्थं मध्यफलम्, उभयचतुर्थं पूर्णफलम् । 'अग्रहात्सग्रहो ज्यायान्—' इत्यादि न्यायत इति योजनीयम्, इति स्वामी ॥ २ 'उच्चाद्युक्तग्रहः 'उच्चो वाहरिणाङ्को वा—' इति निरुक्तग्रहान्यतम इत्यर्थः, इति स्वामी ॥ ३ 'राजयोगाभावे लग्ने शुभदृष्ट्याधनं, पापदृष्ट्या धनरहितः, केन्द्रे शुभग्रहे धनं, पापेनाभावः, उच्चे धन नीचे धनाभावः इत्यादिप्रकारेणोह्यम्' इति स्वामी ॥ ४ 'नवांशकुण्डलीषु यस्मिन्नंशे लग्नं तत्र शुभग्रहश्चेत्प्राबल्यं तस्य पुरुषस्य भवेत्, तदंशकुण्डल्यां लग्नातिरिक्तकेन्द्रेषु सर्वेषु लग्ने च शुभेषु निग्रहानुग्रहक्षमत्वं पूर्णं कस्मिंश्चित्केन्द्रे न्यूने न्यूनं फलम् । यथा शुभन्यूनं वा तथा तथा फलन्यूनता वेदितव्या' इति स्वामी ॥ ५ 'त्रिकोणवदेव धने आरूढाद् द्वितीये द्वौ पापौ मिलितौ लग्नं पश्यतश्चेद् दारिद्र्यं भवतीति यावत्' इति स्वामी ॥ ६ 'पापारूढे पापानां जन्मकालघटीलग्नानां पापाश्रितानां वारूढे पापस्वामिकानां जन्मादीनां वारूढे पापस्वामिके वारूढे पापाश्रिते वारूढे पापखेटे तत्रस्थे द्वितीयस्थे पापाश्रितारूढातिरिक्तपक्षे पापखेटे तत्रस्थे पापारूढस्य इत्यर्थः । द्वादशगे सूर्ये निर्धन इत्येको योगः । चन्द्रे राहौ च व्यये द्वादशे तद्दृष्टे रविदृष्टे पापारूढे तत्रस्थे पापखेटे निर्धन इति द्वितीयो योगः' इति स्वामी ॥

चन्द्रे राहौ च तद्दृष्टे व्यये निर्धन एव सः ॥ (इति)
अष्टमक्षेत्रपतिना दृष्टेऽन्यैर्न विलोकिते ।
पापारूढे तथा लग्ने स्थिरोभयचराश्रिते ॥
नीचग्रहेण संदृष्टे पापारूढे तथा ग्रहैः ।
अन्येनै वीक्षिते मिश्रैर्योगे मिश्रं वदेद्बुधः ॥ (इति)
ऐश्वर्यं स्याच्छुभारूढे पापारूढे दरिद्रता ।
तारतम्यविधिं ज्ञात्वा फलं ब्रूयाद्विचक्षणः (इति)
चन्द्रारूढवशात्प्रश्नं निर्णयाद्बुद्धिमान्नरः ।
भावग्रहात्कारकाद्य मिश्रं चिन्ताफलं विदुः ।
केचित्सत्तद्ग्रहारूढं तत्तद्भावाधिपात्क्रमात् ॥ (इति)
ऐश्वर्ययोगं भावस्य कल्पयेन्मतिमान्नरः । (इति)
त्रिकोणाष्टमगे पापे युद्धाः पापमयामयाः ।
तृतीयाष्टमगे पापे प्राबल्यं शत्रुनिग्रहम् ॥
शुभेषु विपरीतं स्यात्प्राग्वल्लाभे व्ययस्थिते ।
जयप्रदः शुभो राशिरशुभोऽपजयप्रदः ॥
शुभराशिगते पापे कष्टं पूर्वं ततः शुभम् ।
पापराशिगते सौम्ये शुभं पूर्वं ततोऽशुभम्
शत्रुराशौ द्रव्यनाशो मित्रराशौ धनागमः ।
उच्चराशौ भवेत्कीर्तिर्नीचे नैच्यं न संशयः ॥
एतद्राशिफलं चिन्त्यं प्राधान्यात्पाकभोगयोः । इति ।
द्वितीये पञ्चमे सौम्ये राजप्रीतिर्जयो ध्रुवम् ।
पापे तृतीये षष्ठे च शत्रोर्निग्रहणं जयः ॥

१ 'त्रयो योगा 'अष्टम-' इत्यादिना सगृहीता । पापारूढेऽन्यैर्ग्रहैरनवलोकिते अष्टमेशेन दृष्टे सति निर्धन इत्येकः । लग्नेऽप्यन्यैरनवलोकिते अष्टमेशेन दृष्टे सति निर्धन इति द्वितीय । पापारूढे ग्रहैरनवलोकिते नीचग्रहेण सदृष्टे सति निर्धन इति तृतीयो योग ' इति स्वामी ॥ २ 'चन्द्रारूढ तु जन्मकाले चन्द्राश्रितो यो राशिस्तद्राशिपदात्मकम् । यद्वा राशिपदकथने यद्ग्रहपदकथन सूचित तदेव चन्द्रनिरूपित चन्द्रारूढम् । एवं लग्नारूढेन ये योगा निर्वर्तितास्ते सर्वे चन्द्रारूढेनापि यथालक्षण निर्वर्तनीयत्वेन विचारणीया । इद चोपलक्षण सर्वग्रहपदेभ्योऽपि योगा निवर्तनीया ' इति स्वामिव्याख्याश ॥ ३ 'लग्नारूढाच्चन्द्रारूढ प्रश्नेऽभ्यर्हित ' इति स्वामी ॥ ४ 'भावस्थग्रहाद् भावस्वामिग्रहाद्वा' इति स्वामी ॥ ५ 'चिन्तया सिद्ध फलम्' इति स्वामी ॥

चतुर्थे तु शुभे सौख्यमारोग्यं त्वष्टमे शुभे ॥
विपरीते विपर्यासो मिश्रे मिश्रं प्रकीर्तितम् ।
पाके भोगे च पापाढ्ये देहपीडा मनोव्यथा ॥
सप्तमे पाकभोगाख्यां पापे दारार्तिरीरिता ।
चतुर्थे स्थानहानिः स्यात्पञ्चमेऽपत्यपीडनम् ॥
दशमे कीर्तिहानिः स्यान्नवमे पितृपीडनम् ।
पाकाद्वुद्गते पापे पीडा सर्वाप्यबाधिता ॥
उच्चस्थानगते सौम्ये तत्तत्सौख्यं विनिर्दिशेत् ।
केन्द्रस्थानगते सौम्ये लाभशत्रुजयादयः ॥
विपरीते विपर्यासो मिश्रे मिश्रं प्रकीर्तितम् ।
जन्मकालग्रहस्थित्या गोचरस्थग्रहैरपि ॥
विचारितं प्रवक्तव्यं तत्तद्राशिदशाफलम् । इति ।
यश्च राशिः शुभाक्रान्तो यस्य पश्चाच्छुभग्रहः ।
तद्दशा शुभदा प्रोक्ता विपरीते विपर्ययः ॥
त्रिकोणरन्ध्ररिष्फस्थैः शुभपापैः शुभाशुभम् ।
फलमन्यत्तु नक्षत्रदशामार्गेण कीर्तयेत् ॥ इति ।
मेषकर्कतुलानक्रराशीनां च यथाक्रमम् ।
बाधास्थानानि संप्रोक्ताः कुम्भगोसिंहवृश्चिकाः ॥
पाकेश्वरान्तराशेश्च बाधास्थाने शुभेतरे ।
स्थिते सति महाशोको बन्धनं द्रव्यनाशनम् ॥
उच्चस्वर्क्षग्रहे तस्मिञ्छुभे सौख्यं धनागमः ।
तच्छून्यं चेदसौख्यं स्यात्तद्दशा न फलप्रदा ॥ (इति)
बाधकव्ययषष्ठाष्टराहुभुक्तौ महद्भयम् ।

१ 'अष्टोत्तरीविंशोत्तर्यादिरीत्येत्यर्थः' इति स्वामी ॥ २ 'चराणां राशीनामेकादशो राशिर्बाधास्थानसंज्ञको भवतीति यावत्' इति स्वामी ॥ ३ 'पाकेश्वरो राशिर्दशापरिपाकहेतुत्वेन दशेश्वरत्वसंभवात्' यद्वा पाकेश्वरः पाकप्रदराशीश्वरः स्वामित्वगुणतोऽपि राशेर्विलक्षणफलदत्वसंभवात्' अथवा पाकेश्वरो दशानाथखेट एव कारकदशायां ग्रहाणामेव दशाप्रदत्वस्वीकारात्, प्रकृते ग्रन्थेऽष्टोत्तरीविंशोत्तर्यादिमतस्याप्यभ्यनुज्ञातत्वेन ग्रहाणामपि दशेश्वरत्वे विरोधाभावात् । एवं च पाकेश्वरद्वादशद्वितीयराश्योः चकारात्पाकेश्वराच्च बाधास्थाने प्रोक्ते पापग्रहे सति महाशोकादिफलं भवतीति । बाधास्थान एवोच्चस्वर्क्षादिस्थितखेटेन येन केनापि शुभग्रहेण वा युक्ते सौख्यादि भवतीति । नीचादिशुभग्रहादियुक्तत्वेऽपि दुःखमेव भवतीति । बाधा स्थानं शून्यं ग्रहैर्येन सौख्यं न फलान्तरं भवतीति चेत्यादि विवेचनीयम्' इति स्वामी ॥

प्रस्थानं बन्धनं चैव व्याधिपीडार्थनाशनम् ॥ (इति)
पाकेश्वरत्रिकोणे तु राहुकेतू स्थितौ यदि ।
तत्पाके बन्धनप्राप्तिराहुः पीडा रिपोर्भयम् ॥
रव्यारराहुशनयो भुक्तिराशौ स्थिता यदि ।
तद्राशिभुक्तौ पतनं राजकोपो महद्भयम् ॥
भुक्तिराशित्रिकोणे तु नीचखेटः स्थितो यदि ।
तद्राशौ वा नीचयुतेऽप्यपमृत्युभयं भवेत् ॥
भुक्तिराशौ स्वतुङ्गस्थे त्रिकोणे वा स्वतुङ्गगे ।
यदा भुक्तिदशा प्राप्ता तदा सौख्यं लभेन्नरः ॥
नगरग्रामनाथत्वं पुत्रलाभं धनागमम् ।
कल्याणं भोगभाग्यं च सेनापत्यं महोन्नतम् ॥
पाकेश्वरो जीवदृष्टः शुभराशिस्थितो यदि ।
तद्दशायां धनप्राप्तिर्मङ्गलं पुत्रसंभवः ॥ (इति)
सितासिताश्च युग्माश्च सूर्यस्य रिपुराशयः ।
कौर्पितौलिघटाश्चेन्दोर्भौमस्य रिपुराशयः ॥
घटमीननृयुक्तौलिकन्या ज्ञस्य ततः परम् ।
कर्कमीनालिकुम्भाश्च राशयो रिपवः स्मृताः ॥
मेषसिंहधनुःकौर्पिकर्कटाः शनिशत्रवः ।
वृषतौलिनृयुक्कन्याराशयो रिपवो गुरोः ॥
सिंहालिकर्कचापाश्च शुक्रस्य रिपुराशयः । (इति)
भुक्तिर्नवानां तुल्यास्याद्विभाज्या नवधा दशा ।

१ 'फलादेशाय ग्रहाणां शत्रुराशयोऽपि वृद्धैरुदाहृताः' इति स्वामी ॥ २ 'अयमर्थः—नवानां ग्रहाणां शास्त्रेषु महादशा समाम्नाता । एवं विंशोत्तर्यादय । अस्मिन्नपि ग्रन्थे कारकादिदशा ग्रहाणामेवोक्ता । तत्रान्तर्दशाविभागेन किंचिदपि वैषम्यं संपादनीयम् । सममेव नवधा विभज्य नवानां ग्रहाणामन्तर्दशा कल्पनीयाः । अन्तर्दशामपि नवधा विभज्योपदशा । तामप्युपदशां नवधा विभज्य विदशा । तदग्रे सूक्ष्मदशा । एवं घटीपर्यन्तं दशा कल्पनीया । नवानां ग्रहाणामष्टोत्तर्यादिप्रकारविंशदशास्वपि महादशा एव केवलं शास्त्रान्तरसिद्धा इह परिभाषात्वेनोक्ता । विभागदशाक्रमकल्पनाप्रकारास्तु विलक्षणा एव न शास्त्रान्तरानुगुणा इति वेदितव्यम् । तत्रान्तर्दशादौ प्रथमं दशेशस्यान्तर्दशा, तदनन्तरं दशेशाश्रितराशीशस्यान्तर्दशा, तदनन्तरं दशेशाश्रितराशिकेन्द्रस्थानां, तदुत्तरं पणफरस्थानां, तदनन्तरं चापोक्लिमस्थानां, तत्रापि केन्द्रस्थानां मध्ये यो बलवान् ग्रह इत्यादिन्यायेन तस्य पूर्वं पश्चादितरस्य बलसाम्येऽप्यधिकवर्षदस्य पूर्वमितरस्य पश्चादित्यादिन्यायेन विवेक्तव्यम् ।' इति स्वामी ॥

दशांशस्थितराशीशं तत्केन्द्रादिस्थितांस्ततः ॥
विद्यात्क्रमेण शुकांशांस्तद्वत्सूक्ष्मदशादिकम्। (इति)
ये राजयोगदा ये च शुभमध्यगता ग्रहाः।
यस्माद्वा द्वित्रितुर्याः स्युः शुभाशुभफलग्रहाः ॥
तद्दशासु शुभं ब्रूयाद्राजयोगादिसंभवम्।
गताऽशुभदशामध्यं दशा सौम्यस्य शोभना ॥
शुभो यस्य त्रिकोणस्थस्तद्दशापि शुभप्रदा।
आरम्भान्तौ मित्रशुभराश्योर्यदि परं शुभम् ॥
आरम्भान्तत्रिकोणे तु सौम्येऽपि शुभमावहेत्।
शुभराशौ शुभारम्भे दशाः स्युरतिशोभनाः ॥
राहोः केतोश्च कुम्भादि वृश्चिकादिचतुष्टयम्।
शुभं तत्र समारम्भे तद्दशायां शुभं भवेत् ॥
यद्दशायां शुभं ब्रूयात्स चेन्मकरसंस्थितः।
यस्मिन्राशौ दशान्तः स्यात्तस्मिन्दृष्टे युतेऽपि वा ॥
राहोर्दशान्ते सर्वस्वनाशो मरणबन्धने।
देशान्निर्वासनं वा स्यात्कष्टं वा महदश्नुते ॥
तत्त्रिकोणगते पापे निश्चयाद्दुःखमादिशेत्।
एवं शुभाशुभं सर्वं निश्चित्य प्रवदेद्बुधः ॥ इति।
दशारम्भो दशान्तो वा मकरे चेन्न शोभनः।
तस्मिन्नेव च राहुश्चेद्विरोधो द्रव्यनाशनम् ॥
यत्र क्वापि च मे राहौ दशारम्भोऽवसानकम्।
गृहभ्रंशः समुद्दिष्टो धने राहुर्धनार्तिकृत् ॥
चन्द्रशुक्रौ द्वादशे चेद् राजकोपो भवेद् ध्रुवम्।
भौमकेतू तत्र यदि बाधाप्येमहती भवेत् ॥
चन्द्रशुक्रौ धने स्यातां यदि राजा प्रसीदति। (इति)
यस्य पापः शुभो वापि ग्रहस्तिष्ठेच्छुभार्गले।
तेन दृष्टेक्षितं लग्नं प्राबल्यायोपकल्प्यते ॥
यदि पश्येद्ग्रहस्तं न विपरीतार्गलस्थितः। इति।
निशार्धाच्च दिनार्धाच्च परं सार्धद्विनाडिका।
शुभा तदुद्भवो राजा धनी वा तत्समोऽपि वा ॥ इति।
सप्तमेशाद् द्वितीयस्थे राहौ मूकः खले स्थिते।
शनावधिकदन्तो वा दंष्ट्रायुक्तोऽपि वा भवेत् ॥
पञ्चव्याधिमान् केतौ यद्वा स्यादस्फुटोक्तिमान्।
तत्र नानाग्रहैर्योगे मिश्रं फलमुदाहृतम् ॥ इति।
इति जैमिनीयप्रथमाध्यायविवृतन्तर्गता वृद्धकारिकाः।

---

१ स्वामिटीकाया. प्रथमाध्यायस्य तृतीयपादे एतावन्तो वृद्धकारिकाः ॥ २ स्वामिटीकायाः प्रथमाध्यायस्य चतुर्थपादे तु वृद्धकारिकाद्वयमेवेति नमो वृद्धेभ्यः ॥

लग्नेशरन्ध्रपत्योश्च लग्नेन्द्वोर्[1]लग्नहोरयोः[2] ।
सूत्राण्येवं प्रयुञ्जीयात्संवादादायुषां त्रये ॥ ( इति. )
चरे चरस्थिरद्वन्द्वाः स्थिरे द्वन्द्वचरस्थिराः ।
द्वन्द्वे स्थिरोभयचरा दीर्घमध्याल्पकायुषः ॥ ( इति. )
पूर्णमादौ हानिरन्तेऽनुपातो मध्यतो भवेत् ।
राशिद्वयस्य योगार्धे वर्षाणां स्पष्टमुच्यते ॥
एवं द्विकानां संचिन्त्यं त्रयाणां सूत्रवर्त्मना । इति.
होरालग्नादिमांशे तु पूर्णमन्ते न किंचन ।
स्पष्टीकरणमेतत्स्याद्दीर्घमध्याल्पकायुषाम् ॥ इति.
षट्त्रिंशत्पूर्वमल्पायुर्मध्यमायुस्ततो भवेत् ।
द्वासप्तत्याः पुरस्तात्तु ततो दीर्घमुदाहृतम् ॥ इति.
( द्वात्रिंशत्पूर्वमल्पायुर्मध्यमायुस्ततो भवेत्[3] ।
चतुःषष्ट्याः पुरस्तात्तु ततो दीर्घमुदाहृतम् ॥ )
धर्मे मोक्षे चिरायुष्यं धर्मे कामे च मध्यमम् ।
धर्मे धर्मे च स्वल्पायुर्धर्मे धर्मे गतायुषः ॥ इति.
चन्द्रांशार्कं[4] समारभ्य घटिकाभिस्तु पञ्चभिः ।
उदयादिविनाडीभिरायुर्लग्नं प्रकल्पयेत् ॥ इति च.
लग्नलग्नेशतद्राशिनाथभानां[5] त्रिकोणके ।
अल्पमध्यचिरायुष्यं रूपवर्षप्रमाणतः ॥ इति.

---

१ 'लग्नेन्द्वोरित्येतदुपलक्षणं शनिचन्द्रयोरपि' इति स्वामी ॥ २ अन्ये तु होरालग्नमात्रावलम्बनेनैवान्तिमखण्डस्पष्टीकरणमङ्गीचक्रुः, इति स्वामी ॥ ३ द्वात्रिंशदित्यादिपाठभेदो नैलकण्ठीये ॥ ४ चन्द्रांशार्कमिति । उदयादिकनाडीभिरायुर्लग्नं घटीभिः पञ्चभिः कल्पयेत् । भावलग्नानयनवदुदयादिघटीषु पञ्चशः पञ्चशो विभागान्विधायोदयप्रवृत्तखण्डमारभ्य वाराधिपान् गणयेत् तत्र यश्चन्द्रखण्ड आयाति तमारभ्याभिमखण्डसंख्यया पञ्चघटीनां पूर्तौ पञ्चघटीनां त्रिंशदंशाश्चेदिष्टघटीनां किमिति त्रैराशिकं विधाय तत्र प्राप्तांशादीनपि जन्मलग्नस्पष्टे योजयेत्तदेवायुर्लग्नस्पष्टमिति, इति स्वामी ॥ ५ 'एवं वृद्धैरन्यैरपि मार्गान्तरमायुषि दर्शितम्', इति स्वामी ॥ 'यद्वा सूत्रैः सिद्धेषु त्रिविधेषु आयुष्षु अन्त्यकक्ष्यास्पष्टीकरणपरमिदं पद्यम् । अष्टमेशादिर्लग्नत्रिकोणे चेदल्पायुषि शास्त्रसिद्धे सति द्वादशाब्दवृद्ध्या षट्त्रिंशदन्तः, मध्यायुषि शास्त्रसिद्धे सति तु षट्त्रिंशदूर्ध्वं, लग्नेशत्रिकोणेऽष्टमेशादिश्चेद् द्वादशवृद्ध्या द्वासप्तत्यन्तं, दीर्घायुषि शास्त्रसिद्धे तु लग्नेशाश्रितराशीशत्रिकोणेऽष्टमेशादिश्चेद् द्वादशवृद्ध्या अष्टोत्तरशतान्तम्, मध्ये चानुपात इति । रूपवर्षप्रमाणतः द्वादशवर्षप्रमाणत इत्यर्थः । श्लोकार्थः सुगम एव इति स्वामी ॥

तुलामेषविलग्ने तु प्रायः शुक्रो भवेद्बली।
सा दशादौ सरूपा स्यादन्ते च स्यात्स्वभावतः॥ (इति.)
एकोऽष्टमेशः स्वोच्चस्थः पर्यायार्धं प्रयच्छति।
नीचस्थो नाशयेत्पर्यायार्धमायुषि निश्चिते॥
नीचरन्ध्रेशसंयुक्ताः पर्यायार्धं पृथक् पृथक्।
ग्रहा विनाशयन्त्येवं निर्णीते परमायुषि॥
उच्चरन्ध्रेशसंयुक्तग्रहैः प्रत्येकमुन्नयेत्।
एकैकमर्धपर्यायं परमायुषि निश्चिते॥

---

१ 'पूर्वार्धं स्पष्टम्। सा दशा मेषस्य तुलाया वा दशा नाथान्ता इति रीत्या समानीता अब्दमयीरूपेण द्वादशभिरब्दैः सहिता कर्तव्या अधिका द्वादशाब्दा पूर्वमागते नाथान्ताब्दसमूहे मेलनीया इत्यर्थः। तत्र चायं विभाग—लग्ने आदौ आरम्भे प्रथमाद्यारम्भ एव सति द्वादशाब्दा मेलनीया। अन्ते त्रिंशत्तमांशसमाप्तौ लग्ने स्पष्टे सति स्वभावतः स्यात् शून्यमेव स्यात्। द्वादशाब्दा न देया इति यावत्। मध्ये त्वनुपातं विधाय यदागतं तद्योजनीयमिति। स्वभावत इति नाथान्ताब्दा स्वभावतो भवन्ति नाधिकेनाब्देन शुक्लसत्त्वाभाव्यापनेन युक्ता इति द्वादशात्मके शून्यावशेषा शून्येन युक्ता इति वार्थः।', इति स्वामी॥ २ 'आयु' पितृदिनेशाम्भामित्यादिना योगायुः कर्तृत्वेन परिगृहीतोऽष्टमेश उच्चस्थश्चेदधिकं पर्यायार्धं ददाति। अष्टमेशो नाथान्ता इति रीत्या यावदायुर्ददाति तस्मिन्नायुषि पुनरपि तदर्धांशो योजनीय इति यावत्। एवं नाथान्तामर्यादातिरिक्तमर्यादयापि यद्यदायुरष्टमेशेन दीयते तत्सर्वमर्धाधिकं विधेयमेव। अयमेवाष्टमेशो नीचराशिगश्चेद्दीयमानायुष्यर्धं नाशयेत्। एवमेव नीचाष्टमेशयुक्ता अपि ग्रहाः स्वेन स्वेन दीयमानायुष्यर्धमर्धं विनाशयेयुः। एवमुच्चाष्टमेशसंयुक्ता अपि ग्रहाः स्वेन दीयमानं यद्यदायुस्तत्तत्स्वार्धवर्धितमेव दद्युः। परमायुषि निश्चित इत्युक्त्या आयुः पितृदिनेत्यादिनोपात्तयोगायुर्दायादिष्वयं संस्कार इति ध्वन्यते। एवमेव लग्नेशादयोऽपि तत्तद्योगघटकास्तत्संयुक्ताश्च ग्रहा उच्चनीचादिगुणतो वृद्धिह्रासावुक्तरीत्या कुर्युरिति सम्प्रदायः। रव्यादयो ग्रहा मरणविषये क्रमेणोत्तरोत्तरं बलिनो भवन्ति। रवेः कुजः कुजाच्छनिकेतू शनिकेतुभ्यां राहुः प्रबल इति। यदि द्विना मृत्युयोगप्रदास्तत्र निसर्गबलस्य उत्तरग्रहस्यैव दशायां मृतिं वदेदिति भावः। रव्यादिभिः पठितैर्ग्रहैरष्टमेशेन शनिराह्वन्यतरयुक्तग्रहैर्वा शुभावीक्षितैर्मृतिं विनिर्दिशेत्। एतेषु यः प्रबलः तत्स्वामिकराशिदशायां ग्रहाश्रितराशिदशायां वा मरणं चिन्तनीयमिति यावत्। एतेषां मध्ये एकं पर्यायकस्य चिह्नस्य राश्यादिदशा मृतिस्थानं निर्दिशेदिति योजना। मृतिस्थानभूतायां महादशायां सिद्धायां तत्रापि क्रमेणान्तर्दशाप्रदेषु राशिषु मारकत्वेनागतस्य बलवतः शूलाद्यधिष्ठातुर्ग्रहस्यान्तर्दशाधिकरणे राशौ मृतिं ब्रूयादित्यर्थः। तयोरिति शनिराह्वोः शुभग्रहसम्बन्धे सति तत्स्वामिकराशौ तदाश्रयराशौ वा मरणं निर्दिशेत्। भोगेति। यथा सुखदुःखादिप्रदेशकराशौ भोगे ग्रहान्तरस्य बन्धदौर्बल्यादिभिः फलवैषम्यं न तथा मरणविचार इति भावः। केतोरिति। केतोर्द्वादशे दशमे वा पापग्रहदृष्टे सति केतुदशाप्रमाणावेव मृतिः। शुभग्रहेण द्वादशदशमयोर्दृष्टयोः सर्वोऽनायं नियम इति भावः।' इति स्वामी।

त्रिकोणाख्यदशायां च पाकभोगप्रकल्पनम् ॥ इति.
पाके भोगे च पापाढ्ये देहपीडा मनोव्यथा । इति.
वलिनः शुक्र (१) शशिनोः (७) केन्द्राख्यां तु दशां नयेत् ।
पुरुषश्चेत्ततो नेया स्त्री चेद्दर्पणतो नयेत् ॥
शुक्रादि (१) प्रथमं नीत्वा द्वितीयं सूर्यतो (५) नयेत् ।
कुजादि (९) च नयेत्पश्चात्प्राकारं सर्वतो नयेत् ।
क्रमव्युत्क्रमभेदेन शुक्रसूर्यकुजाद्गयेत् ।
एवं ज्ञात्वा फलं सर्वं ब्रूयादयतिथं भवेत् ॥ इति.
( भागाधिकः कारकः स्यादल्पभागोऽन्त्यकारकः ।
मध्यांशो मध्यखेटस्तु उपखेटः स उच्यते ॥ )
लग्नात्कारकपर्यन्तं सप्तमाद्वा दशां नयेत् ।
उभयोरधिका संख्या कारकस्य दशासमाः ॥
लघुकानां च तत्तुल्यं प्रत्येकं स्युर्दशाः क्रमात् ।
ग्रहात्कारकपर्यन्तं संख्यान्यस्य दशा भवेत् ॥
कारकस्तद्युतश्चादौ तत्केन्द्रादिस्थितास्ततः ।
दशाः क्रमेण विज्ञेयाः शुभाशुभफलप्रदाः ॥ ( इति. )
प्रतिभं नव वर्षाणि कारकाश्रयराशितः ।
जन्मसंपद्विपत्क्षेमः प्रत्यरिः साधको वधः ॥

व्यवस्थेयं समस्तापि कारकादिदशास्वपि।
बलिनः शुक्रशशिनोर्ग्राह्यं षष्ठाष्टमादिकम् ॥ इति.
चरे चरस्थिरद्वन्द्वा इति यो राशिरागतः।
स एव मारको राशिर्भवतीति विनिर्णयः॥
बहुराशिसमावेशे बलवान्मारकः स्मृतः। इति.
चरे इत्यादिनायुर्यत्तत्समासूचितो भवेत्।
यो राशिः स तु विज्ञेयो मारकः सूत्रसंमतः॥ इति.
ओजराशिगते खेटे क्रमादन्तर्दशां नयेत्।
तत्तद्राशिनवांशाद्यां युग्मे तु विपरीततः॥ इति.
चरेऽनुज्झितमार्गः स्यात्षष्ठषष्ठादिकाः स्थिरे।
उभये कण्टकाज्ज्ञेया लग्नपञ्चमभाग्यतः॥
चरस्थिरद्विस्वभावेष्वोजेषु प्राक् क्रमो मतः।
तेष्वेव त्रिषु युग्मेषु ग्राह्यं व्युत्क्रमतोऽखिलम्॥
एवमुल्लिखितो राशिः पाकराशिरिति स्मृतः।
स एव भोगराशिश्च पर्याये प्रथमे स्मृतः॥
लग्नाद्यावतिथः पाकः पर्याये यत्र दृश्यते।
तस्मात्तावतिथो भोगः पर्याये तत्र गृह्यताम्॥
तदिदं चरपर्यायस्थिरपर्याययोर्द्वयोः।

---

१ अयमर्थः—'अत्र षष्ठादिराशिपरिग्रहः' लग्नसप्तमयोर्यो बलवाँस्तस्माद्बोद्धव्यः। तत्र षष्ठाष्टमेशाविति द्वादशेशयोरप्युपलक्षणम्। षष्ठेशादयो मारका भवन्ति तेषु प्रायेणाष्टमेशो मारकः। षष्ठे पापबाहुल्ये तु षष्ठेश एव प्रधानमारकः। मध्यायुषि सति षष्ठस्याष्टमस्य षष्ठेशाश्रयस्याष्टमेशाश्रयस्य वा राशेर्दशायां मृतिः। पश्चात् षष्ठेशाद्वा त्रिकोणगोऽपि मारकः। दीर्घायुर्विषये षष्ठतदीशत्रिकोणगग्रहाश्रितराशेस्तद्ग्रहस्वामिकराशेर्वा दशायां मृतिः। षष्ठे बलवति षष्ठत्रिकोणस्य षष्ठेशे बलिनि तत्त्रिकोणस्य च दीर्घायुषि निरुक्ता मृतिर्भवतीति', इति स्वामी॥ २ 'अन्ये तु' इति स्वामी॥ ३ अयं भावः—'पितृदिनेशादिद्विकानामाश्रयीभूतो यो राशिः स मारकः। ते राशयो यदि बहवस्तर्हि 'अग्रहाद—' इत्यादि न्यायेन यो राशिर्बलवान् स मारकः। तद्राशिदशायां तदीशाश्रयराशिदशायां वा मृतिरिति, इति स्वामी॥ ४ 'अपरे तु,' इति स्वामी॥ ५ 'चरे'—इत्यादिश्लोकेन यद्दीर्घायुः समागतं 'पूर्ण—' इत्यादिना स्पष्टीकृतं तदायुर्यद्राशौ समाप्तं तद्राशिरेव मारक इत्यर्थः' इति स्वामी॥ स्वामिटीकाश्च द्वितीयाध्यायस्य प्रथमपादे एतावत्यः कारिकाः। द्वितीयपादे तु नैकापि कारिका लब्धास्माभिरिति॥ ६ 'अन्ये तु' इति स्वामी॥ ७ स्वामिटीकाया द्वितीयाध्यायस्य तृतीयपादे एका कारिका लब्धा॥

त्रिकोणाख्यदशायां च पाकभोगप्रकल्पनम् ॥ इति.
पाके भोगे च पापाढये देहपीडा मनोव्यथा । इति.
थेलिनः शुक्र (१) शशिनोः (७) केन्द्राख्यां तु दशां नयेत् ।
पुरुषश्चेत्ततो नेया स्त्री चेद्दर्पणतो नयेत् ॥
शुक्रादि (१) प्रथमं नीत्वा द्वितीयं सूर्यतो (५) नयेत् ।
कुजादि (९) च नयेत्पश्चात्प्राकारं सर्वतो नयेत् ।
क्रमव्युत्क्रमभेदेन शुक्रसूर्यकुजान्नयेत् ।
एवं ज्ञात्वा फलं सर्वं ब्रूयादवतिथं भवेत् ॥ इति.
( भागाधिकः कारकः स्यादल्पभागोऽन्त्यकारकः ।
मध्यांशो मध्यखेटस्तु उपखेटः स उच्यते ॥ )
लग्नात्कारकपर्यन्तं सप्तमाद्या दशां नयेत् ।
उभयोरधिका संख्या कारकस्य दशासमाः ॥
तद्युक्तानां च तत्तुल्यं प्रत्येकं स्युर्दशाः क्रमात् ।
ग्रहात्कारकपर्यन्तं संख्यान्यस्य दशा भवेत् ॥
कारकस्तद्युतश्चादौ तत्केन्द्रादिस्थितास्ततः ।
दशाः क्रमेण विज्ञेयाः शुभाशुभफलप्रदाः ॥ ( इति. )
प्रतिमं नव वर्षाणि कारकाश्रयराशितः ।
जन्मसंपद्विपत्क्षेमः प्रत्यरिः साधको वधः ॥
मैत्रं परममैत्रं चेत्येवमन्तर्दशां नयेत् । इति.
लग्नाच्च सप्तमात्षट्सु यो ग्रहोऽधिकराशिगः ।
सोऽन्त्यग्रहो द्वयोस्तौल्ये ग्रहयुक्तस्तदा भवेत् ॥
ग्रहयोगेऽपि तुल्ये स्यादधिकग्रहयोगतः ।
अनाधिके तु विज्ञेयो निसर्गबलवान् ग्रहः ॥
प्रत्येकयोश्च साम्येऽपि निसर्गबलवान् ग्रहः ।
कारकादिव तस्माच्च भवेयुर्ग्रहजा दशाः ॥ ( इति. )

---

१ 'ततस्तावतिथं बाह्यम् २।३।४॥,' इति सूत्रार्थो 'लग्नाद्यावतिथः—', इति श्लोकेन सगृहीतो विज्ञेयः । 'दशाश्रयो द्वारम् २।४।२॥,' इति सूत्रार्थोन्तर्गततत्तद्दशाश्रितदशानयनप्रकारतत्क्रमादिभेदाः 'प्रथमे प्राक्—२।४।८॥,' इत्यादिभिश्चतुर्भिः सूत्रैर्वक्ष्यमाणाः 'चरेऽनुज्झित—,' इत्यादिश्लोकेन सगृहीता वेदितव्याः, इति स्वामी ॥ २ 'पृथक् क्रमेण—२।४।१०॥,' इत्यादिसूत्रमिदं वृद्धैरन्यैरप्युपबृंहितम्, इति स्वामी ॥ ३ 'इयं च नवग्रहदशा वृद्धैरुपनिबद्धा । तथाहि' इति स्वामी ॥ ४ 'इयं जन्मादिदशेति व्यवह्रियमाणा । तदुक्तं वृद्धैः,' इति स्वामी ॥ ५ 'इदं वान्त्यकारकद्वैविध्यं कारकादन्दाद्यानयनं च वृद्धैरुक्तं तथाहि,' इति स्वामी ॥

( भागाधिकः कारकः स्यादल्पभागोऽन्त्यकारकः ।
मध्यांशो मध्यखेटः स्यादुपखेटः स एव हि ॥
लग्नात्कारकपर्यन्तं सप्तमाद्वा दशां नयेत् ।)
दशान्त्यग्रहपर्यन्तं परा स्यात् खेटजा दशा ॥
ग्रहात्कारकपर्यन्तं कारकाद्वा विलोमतः ।
(वर्षद्वादशकं तत्र न चेदेकं विनिर्दिशेत् ॥ )
ग्रहयुक्ते तु तद्राशावोजे युग्मे यथाक्रमम् ।
तत्केन्द्रं तु ततः पश्चात्तस्मात्पणफरं तथा ॥
आपोक्लिमक्रमेण स्युर्दशाः सर्वग्रहोद्भवाः ।
तत्रापि पर्यायदशाभेदैः पर्यायमुन्नयेत् ॥
तत्रापि च दशाछिद्रं मृतिवर्षं विनिर्दिशेत् ।
( रविः कुजः शनी राहुर्मरणे बलिनः क्रमात् ॥
विरोधे दुर्बलं हित्वा गृह्णीयाद्बलिनं सुधीः ।)
गुरुश्चन्द्रो भृगुः सौम्यो विरोधे बलवाञ्शुभः ॥
मेषाद्यसव्यमार्गेण राहुकेतू न कारकौ । इति.
आत्मनस्तु दशा नेया जन्मसंपदुदीरिता ।
क्रमप्राकारमार्गेण कुज(१)वर्षप्रमाणतः ॥
जन्मसंपद्विपन्मुख्यक्रमाद्ग्राह्यास्तदात्मनः ।
दैवविन्तु फलं ब्रूयाद्विपदादि विचार्य तु ॥ (इति.)
जातग्रहेषु यः खेटः केवलो योगदोऽपि वा ।
सुप्रसिद्धामुडुदशां तस्माच्चन्द्राद्विचोत्तयेत् ॥
तत्र ग्रहेषु यः कोऽपि यदि लग्नं न पश्यति ।
लग्नत्रिकोणद्रष्टारं तद्वालम्ब्य दशां नयेत् ॥ इति.
ओजराशिगते खेटे क्रमादन्तर्दशां नयेत् ।
तत्तद्राशिनवांशादि युग्मे तु विपरीततः ॥ इति.
बलिनः शुक्र (१) शशिनो (७) ज्ञेया मण्डूकदा दशा ।
शुक्रस्यौजपदात्प्राणः शशिनो युग्मतः स्मृतः ॥ इति.
( बलिनः शुक्रशशिनोर्ज्ञेया मण्डूकदा दशा ) ।
पुरुषश्चेत्ततो नेया स्त्री चेद्दर्पणतो नयेत् ॥ इति.
लग्नत्रिकोणे यो राशिर्बलवानुक्तहेतुभिः ।

---

१ 'अपरे वृद्धा जन्मादिदशाक्रमं केन्द्रस्थक्रममपहायानुज्झितक्रमेण कारकाश्रयराशितो वर्णितवन्तः,' इति स्वामी ॥ २ 'योगदग्रहस्य केवलग्रहस्य च प्राग् राजयोगप्रकरणे समाम्नातस्य यथायोगं दशाप्रवर्तकत्वं वृद्धैरुक्तम्, इति स्वामी ॥ ३ 'जन्मतारं द्वादशधा—' इति रीत्या वा योगदकेवलयोर्दशा नेया अस्या च राशिदशायां ताराऽभाग्प्रवृत्तायां वृद्धैरन्तर्दशानयनप्रकारो निरुक्तः,' इति स्वामी ॥ ४ 'अत्र प्रसिद्धत्रिकोणदशावदेव दशाक्रमो वृद्धैर्निरुक्तः' इति स्वामी ॥

तमारभ्योत्क्रमयेद्धीमाञ्चरपर्यायवद्दशाम् ॥
युग्मराशिभुवां पुंसामोजं गृह्णीत संमुखम् ।
ओजराशिभुवां स्त्रीणां युग्मं गृह्णीत संमुखम् ॥
ओजराशिभुवां पुंसां गृह्णीयादोजमेव तु ।
युग्मराशिभुवां स्त्रीणां युग्ममेव समाश्रयेत् ॥
क्रमोत्क्रमाभ्यां गणयेदोजयुग्मेषु राशिषु । इति.
ओजे लग्नं तदेव स्याद् युग्मे तत्सप्तमं भवेत् ।
दशौजे क्रमतो ज्ञेया युग्मे व्युत्क्रमतो मता ॥ (इति.)
योगार्धा प्रथमा प्रोक्ता द्वितीया दृष्टिरुच्यते ।
चलाचलविमिश्रार्धो दशा योगार्धका मता ॥
बलिनस्तु दशा नेया राशेर्हि शशिशुक्रयोः ।
स्त्री चेद्दर्पणतो नेया पुरुषश्चेत्ततो नयेत् ॥
सा दशा त्रिविधा प्रोक्ता द्रेष्काणांशर्क्षभेदतः ।
दृष्टियोगपदाद्यैस्तु फलं ब्रूयाद्विचक्षणः ॥ इति.
(अग्रहात्सग्रहो ज्यायान् सग्रहेऽप्यधिकग्रहः ।
साम्ये चरस्थिरद्वन्द्वाः क्रमात्स्युर्बलशालिनः ॥)
(लग्नत्रिकोणे यो राशिर्बलवानुक्तहेतुभिः ।
तमारभ्योत्क्रमयेद्धीमाञ्चरपर्यायवद्दशाम् ॥)
(क्रमाद्वृषे वृश्चिके च व्युत्क्रमात्कुम्भसिंहयोः) ।
षष्ठषष्ठादिका ग्राह्या इत्येतावद्विशिष्यते ॥ इति.
यद्वौजयोः क्रमेणैव युग्मयोर्व्युत्क्रमेण वै ।
षष्ठषष्ठादिका ग्राह्या नेव किंचिद्विशिष्यते ॥ इति.
जन्मतारं द्वादशधा विभक्ते यत्र चन्द्रमाः ।
लग्नाद्यावतिथे राशौ न्यसेदादौ दशाधिपम् ॥
स यद्युच्चेऽथवा नीचे तदा स्याद्राजसेवकौ ।
स्वमित्रर्क्षे सुखी शत्रुराशौ निःस्वः समे समः ॥ इति.

(समाप्तश्चायं सपरिकरो ग्रन्थः)

---

१ 'स्थूलादर्शवैषम्यामय–२।४।१५॥' इत्येतद्वृद्धरपरथापि योजितम्, इति स्वामी ॥ २ 'एवं वृद्धा दशाविषये प्रकारविशेषमपि कंचनाधिकं कथितवन्तः' तथाहि, इति स्वामी ॥ ३ 'केचित्तु महादशावाचनेऽपि वृषादिषु क्रमव्यत्ययमसहमानाः 'क्रमाद्—' इत्यादिपद्यं प्रोक्तं पठन्तः पद्यान्तरे स्वयं पेठुः—यद्वौजयोरिति । अयमर्थः—यद्वेति वृद्धान्तरोक्तप्रत्याख्यानाय कल्पान्तरारम्भः, इति स्वामी ॥ ४ स्वामिटीकाया द्वितीयाध्यायस्य चतुर्थपादे एतावन्तो वृद्धकारिका इति शिवम् ॥